| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विकम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| हनुमन्नाटकसटीक | — | पुराण | पूर्ण | - | ७/12 | २१८ | संस्कृत | कागद | ९ | 45 | | |

M- २९९९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्रीगणेशायनमः श्रीशंवंदे श्रीसीतारामचंद्राभ्यांनमः त्वदयैयत्प्रेरणयासमुद्यतोहंविमूढतरबुद्धिः तत्पदकमलंवंदेगोकुलनाथस्यवेदादेः १
हनुमन्नाटकसागरशब्दार्थागाधतांसुबोधत्वम् नेतुंकृतसाहसतांममसुधियःक्षंतुमर्हंतु २ तावच्छ्रीरामचंद्रगुणचक्रवालवर्णनेच्छुःकविः स्वाभीष्ट
देवतानामांतरिताशीःपूर्वांनांदीमवतारयति कल्याणानामित्यादिद्वादशपदैः तदुक्तंनाटकावतारे अष्टाभिर्दशभिर्वापिनांदीद्वादशभिःपदैः आशीर्नम
स्क्रियावस्तुनिर्देशोवापितन्मुखमिति नांदीमंगलवचनमिति अत्रसंक्षेपतोर्थोद्घाटनंक्रियते विस्तरस्यग्रंथाविच्छेदकत्वात् रामनाम भवतांभूतयेप्रभवतु

कल्याणानांनिधानंकलिमलमथनंपावनंपावनानांपाथेयंयन्मुमुक्षोःसपदिपरपदप्राप्तयेप्रस्थितस्य
विश्रामस्थानमेकंकविवरवचसांजीवनंसज्जनानांबीजंधर्मद्रुमस्यप्रभवतुभवतांभूतयेरामनाम १

इत्यन्वयः भूतयेऐहिकपारलौकिकैश्वर्याय मोक्षायवा भूतिरैश्वर्यमोक्षयोरितिचरकः मेलकोपमालंकारः उक्तंचवीरभानौ विशेषणार्थेनिर्भर्ताविद्यने-
कार्थभाक्पदः वाच्यवादिविहीनोपिमेलकःसंमतोबुधैरिति तत्रविशेषणैस्तद्रूपप्रदत्वंद्योतयति कल्याणानि निधीयंतेयस्मिन्तत् निधानं कलिमलमथ
नं एतेनपापहारित्वमुक्तं कविवरवचसांवाल्मीक्यादिवाचांएकंविश्रामस्थानम् एतेनतदितरस्यासद्वर्णनत्वमुक्तम् एतेनपदत्रयेणैहिकैश्वर्यप्रदत्वमुक्तं
पारलौकिकैश्वर्यप्रदत्वमाह पावनानांब्रह्मादीनामपिपावनम् एतेनतत्तल्लोकप्रदत्वमुक्तं अतःपारलौकिकैश्वर्यप्रदत्वमायाति अथमोक्षप्रदत्वमा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

टी.

२

ह परपदप्राप्तये परस्मिन्ब्रह्मणि पदंस्थानं तत्प्राप्तये प्रस्थितस्य मुमुक्षोः पाथेयं मार्गे ननु नाम्नैव मोक्षः कथं धर्मादीनां सत्वशोधकत्वेन मोक्षदत्वमिति चेत्तत्रा
ह धर्मद्रुमस्य बीजं नाम्नि कीर्तिते सर्वे धर्माः कृता भवंति अथोत्पत्तिबीजे पुष्पफलादिकं सर्वमस्तीति जीवनानांइति वा पाठः जीवनं प्रकृतिस्तस्यापि जीवनं चे
तनकर्तृ उक्तंच यतोजीवत्वमायाति जीवः प्रकृतितः स्वतइति एतैर्विशेषणैर्मोक्षप्रदत्वमुक्तम् १ इदानीं वर्णनीयनायकगुणानाह पात्विति सदेवोवि
लसनशीलः श्रीरामोवः पातु कीदृक्श्रियस्तनयोर्यः पत्रभंगः पत्ररचना तत्र या मकरीमुद्रा तयांकितोरस्थल एतेन शृंगारित्वं सूचितं सर्वजगत्पतिरेतेन रं-

अंक

१

पातु श्रीस्तनपत्रभंगमकरीमुद्रांकितोरस्थली देवः सर्वजगत्पतिर्मधुवधूवक्त्राब्जचंद्रोदयः क्रीडा
क्रोडतनोर्नवेंदुविशदे दंष्ट्रांकुरे यस्य भूर्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः २

जितलोकत्वमुक्तम् पुनः कीदृक् मधुमधूवक्त्राण्येवाब्जानि कमलानि तत्संकोचनाय चंद्रोदयः सकः यस्य नवेंदुविशदे द्वितीयाचंद्राकारे दंष्ट्रांकुरे भू
र्भाति स्म क्रीडायै धृता वराहतनुर्येन किंभूता भूः प्रलयाब्धिरेव पल्वलमल्पसरस्तस्य तलं तत उत्खातोयः एकमुस्तस्तंबस्तदाकारा एतेन पदद्वयेनातिक
ल्पत्वमुक्तम् उक्तंच रसोदधौ दाता सद्गुणशीलः सुवयो रूपान्वितः परप्रेमी विद्यावानतिकल्पो रंजितलोको मतो नेनेति २ ५ ५

२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अथविद्यागानितिनेतृगुणंवक्तुंपद्यमवतारयति यमिति यंरामंशिवभक्ताः शिवेतिनाम्नासमुपासते महारुद्राद्भूत्प्रकृतिरतः सूत्रं ततोहमिति ततोविश्व-
मितिश्रुतेः वेदांतिनोब्रह्मेति एकमेवाद्वितीयंब्रह्म नेहनानास्तिकिंचनेतिश्रुतेः बौद्धाः बुद्धइति प्राण्यालंभनंसंसृतिंनंदयंयेनिमामितिश्रुतेः प्रत्यक्षानुमा
नोपमानशब्दाभावार्थप्रतिपत्तिप्रमाणानीतिप्रमाणेष्वेवनिपुणानैयायिकाः कर्तेति सनातनाः पशवः प्रविशंति प्रमेयानुभूतैः कर्तैवतनइतिश्रुतेः जै

यंशैवाः समुपासतेशिवइतिब्रह्मेतिवेदांतिनोबौद्धाबुद्धइतिप्रमाणपटवः कर्तेतिनैयायिकाः अर्हन्नित्यथजैनशा
सनरताः कर्मेतिमीमांसकाः सोयंवोविदधातुवांछितफलंत्रैलोक्यनाथोहरिः ३ तंरामंरावणारिंदशरथतनयंलक्ष्म
णाग्र्यंगुणाढ्यंपूज्यंभाज्यंप्रतापावलयितजलधिंसर्वसौभाग्यसिद्धिम् विद्यानंदैककंदंकलिमलपटलध्वंसिनंसौम्य
देवंसर्वात्मानंनमामित्रिभुवनशरणंप्रत्यहंनिष्कलंकम् ४

नाज्ञाभिरताअर्हन्निति स्वभावएवेश्वरोनान्योस्तिकदाप्यस्यानीदृशत्वापत्तेरितिश्रुतेः मीमांसकाः कर्मेति कर्मणाजायतेनश्यतिभयाभयंसुखानीति
श्रुतेः एतैस्तदुपदेशितैः मार्गैरेवयमुपासते सोयंरामोवांछितफलंपूरयतु एतेनविद्यावत्त्वमुक्तं हरिरित्यनेनदुःखहारित्वासरप्रेमगुणोदर्शितः त्रैलो
क्यवासिजनैस्तत्तद्देवताभजनेनतत्तत्फलंप्रतिनाप्यते याच्यतेइत्यनेनदातृत्वमुक्तम् २ ४ ५ ५ ५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इदानींकथायोजनाय व्याख्याकृदात्मनः श्लोकचतुष्टयमवतारयति आसीदित्यादि पंक्तिरथोदशरथोभूपः राजा आसीत् सकः यस्य भूरिश्रवाः नाराय
णः स्वंआत्मानमेवरामलक्ष्मणभरतशत्रुघ्नरूपेणचतुर्धाविधायपुत्रतां आरप्राप किमर्थंउर्व्यांयेबर्बरा राक्षसास्तेषां योभूरिभारस्तन्नाशाय बर्बरोराक्ष

आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रांतिको भूपः पंक्तिरथोविभावसुकुलप्रख्यातकेतुर्बली उर्वीबर्बरभूरिभारह
तयेभूरिश्रवाः पुत्रतांयस्याारस्वमथोविधायमहितः पूर्णश्चतुर्धाविभुः ५ तेषामीश्वरतागुणैश्चजनुषाज्यायान भूद्राघवोरा
मः सोप्यथकौशिकेनमुनिनारक्षोभयाद्याचितः रांजानंसयशोधनोनरपतिः प्रादात्सुतंदुःखितस्तस्मैसोपितमन्वगादनुग
तः सौमित्रिणोच्चैर्मुदा ६ सुंदरस्त्रीदमनप्रमोदमुदितादास्थायविद्योदयंरामः सत्यवतीसुतादथगतस्तस्याश्रमंलीलया
क्रूम्हेकौशिकनंदनेनचमखेतत्रागतान्राक्षसान्हत्वामूमुचदाशुभाविविदसौमारीचमुग्राकृतिम् ७

सोधमइतिधरणिः किंभूतः पुत्रार्थमिष्टः अन्यत्सुगमम् ५ तेषांचतुर्णांपुत्राणांमध्येजनुषाजन्मनाईश्वरत्वप्रतिपादकगुणैश्चरामः ज्यायानतिश
येनज्येष्ठोभूदितियोज्यम् अन्यत्सुगमम् ६ सुंदनाम्नोरक्षसः स्त्रीताटकासत्यवतीसुताद्विश्वामित्राद्विद्योदयंभाविवित् निमित्तभूतेनानेनमृ
गरूपेणरावणः सीतांहरिष्यतीति भाविवित् शेषंसुगमम् ७ छ छ छ छ



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

८ तत्ररामंदृष्ट्वासीताविचिकित्सति कमठेति इदंधनुः कमठपृष्ठवत् कठोरंरघुनंदनोरामोमधुरमूर्तिः सुकुमारांग अहहहेतिखेदे अनेनरामेणइ
दंधनुः अधिज्यं अधिकृतगुणंकथंविधीयतां अतः तातस्यपितुः पणः कोपिधनुरधिज्यंकरिष्यतितस्मैसीतांदास्यामीत्येवंरूपाप्रतिज्ञास्त्ववायस्तुत्वेदार
णः अयोग्यः अस्तुत्यइति यद्वा अधिसर्गपाठे हेतातत्वपणोदारुणः इतिमानसोक्तिः तातपणश्चेत्त्वाभविष्यत्तर्ह्यहंराममन्विष्यामीतिभावः स्त

पूर्णेयज्ञविधौधियासुरभवद्रामेणसार्धंमुनिः सीतासंवरणागताखिलनृपव्याभग्नवीर्यश्रियम् श्रुत्वातद्धनुरुत्सवंचमिथि
लामास्थायतेनाधिकंसत्कारैरुपलंभितः पुनरगाच्चापाश्रितंमंडलम् ८ कमठपृष्ठकठोरमिदंधनुर्मधुरमूर्त्तिरसौरघुनंदनः कथ
मधिज्यमनेनविधीयतामहहतातपणस्त्ववदारुणः ९ आद्वीपात्परतोप्यमीनृपतयः सर्वेसमभ्यागताः कन्यायाः कलधौतको
मलरुचेः कीर्तेश्चलाभः परः नाकृष्टंनचटंकितंननमितंनोत्थापितंस्थानतः केनापीदमहोमहद्धनुरिदंनिर्वीरमुर्वीतलम् १०

वः स्तोत्रंस्तुतिर्नुतिरित्यमरः ९ अथरामः सीतासंशयमवधार्यात्मशक्तिंज्ञापयितुंलक्ष्मणमनुवदति आद्वीपादिति भोलक्ष्मण अमीनृपतयः आ
द्वीपात्समभ्यागताः द्विर्गताआपोयस्मिन्निति द्वीपं सागरांतर्वर्तीदेशः तमभिव्याप्यपरतः लंकादेरपि यद्वाद्वीपोजंबुद्वीपस्तमभिव्याप्यपरतोद्वीपांतरा-
दपितत्रापिसर्वेनतुकेचन तेषांमध्येकेनापिइदंमहद्धनुः महतोरुद्रस्यधनुर्यद्वामहच्चेदंधनुश्चनाकृष्टंनत्वाकर्षणंतिष्ठतु नटंकितंटंकारवन्नकृतम् ए

तदपिनिष्ठतु ननमितमपि स्थानतोपिनोत्थापितम् अहोमहदाश्चर्यमिदंउर्वीतलंनिर्वीरंवीरएवअत्रकोपिनास्ति यद्वाइदंधनुर्निर्वीरं निर्गताः परा-
जिताः मानभंगात्सलाधितावावीरायस्मात्तदिति वाक्यांतरेणेदंशब्दस्यपुनरुक्तिः उर्वीतलमिति समभ्यर्थेप्रथमांतपदमार्षं नन्वेतदाकर्षणादौकोलाभ
इतिचेत्तत्राह कलधौतस्यदाहोत्तीर्णहेम्न इव कोमलारुचिर्यस्या एवंभूतायाः कन्यायाः लाभः अपरंकीर्तेश्चलाभः कलधौतंतप्तहेम स्यादितिधर
णिः कन्येयंकलधौतकोमलरुचिः कीर्तिश्चलाभोपर इतिपाठेप्ययमेवार्थः इयंकन्यासीतातल्लाभः इतिसीतायाः पित्राद्यधीनतया कन्यात्वम् १०

गद्यम् लक्ष्मणः रामत्वद्यानंदकंदांकुरोद्भवायनिजप्रचंडदोर्दंडयोर्महतींप्रौढींनादयति देवश्रीरघुनाथकिंबहुतयादासोस्मि
तेलक्ष्मणोमेर्वादीनपिक्ष्मूधरान्नगणयेजीर्णः पिनाकः कियान् तन्मामादिशपश्यपश्यच्चबलंभृत्यस्यचत्कौतुकं प्रोद्धर्तुंप्रतिनामि
तुंप्रचलितुंनेतुंनिहंतुंक्षमः ११

देवेति पूर्वार्द्धस्पष्टमेव नन्तस्मात्कारणात् मामादिश आज्ञापय भृत्यस्यममयत्कौतुकंआश्चर्यकर्तृबलंतत्पश्यप
श्येत्यादरे वीप्साकिंबलमितिचेत्तत्राह एतद्धनुः प्रोद्धर्तुंभूमेः प्रतिनामितुंनम्रीकर्तुंप्रचलितुंकोणगुणालोकनायचपलयितुंनेतुं इतोगमयितुंनिहंतुंभ
ग्नीकर्तुंक्षमोस्मि किंपुनराकर्षणमात्रमितिभावः पिनाकोजगवंधनुरित्यमरः ममैवात्रेदृशीशक्तिः भवतस्तुब्रह्मांडोद्धरणसहाइतिद्योनितम् ११



CC-0. In Public Domain. Kavikulguru Kalidas Sanskrit University Ramtek Collection

तयोरेवंवदतोरंतरमासाद्य रावणपुरोहितो जनकमनुवदति भोजनक इयं सर्वोत्तमा दुहिता कस्मैचिद्याचतेपि वराय दातव्यैव असौ प्रसिद्धः कुलाचारः एतेन कौलिन्यमुक्तम् लंकापतिरनेनैश्वर्यमुक्तम् दोःक्रीडामशकीकृतत्रिभुवन एतेन कल्पत्वमुक्तं भुजक्रीडानिर्जितत्रिभुवनः यद्वा भुजक्रीडया मशकीकृतं निश्चेतनीकृतं त्रिभुवनं येन दंशाचेतनयोर्मशा इति विश्वः मशा एव मशकः एवंभूतो रावणः एनां स्वयमेव याचते तत्तस्माद्ज्ञातार्थवदीक्षसे विचारयसि ननु वितर्के प्राग्भवाः प्राच्या मरीच्यादयो मुनयः तद्वृत्तानि रावणचरितानि कथागोष्ठीषु नः अस्मान् शासते कथयंति किंभूतानि परोरजांसि शुद्धानि यद्वा

रावणपुरोहितः दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ दोःक्रीडामशकीकृतत्रिभुवनो लंकापतिर्याचते तत्किं मूढवदीक्षसे ननु कथागोष्ठीषु नः शासते तद्वृत्तानि परोरजांसि मुनयः प्राच्या मरीच्यादयः १२

रजोभ्यो भूरेणुभ्यः पराणि अधिकानि परोरजांसि परस्शब्दं निपातनं मन्यते भोजराजः इत्यादि विशिष्टगुणो यं याचते तस्मादस्मै दातव्यमिति भावः ननु कथागोष्ठीषु नस्यास तीति पाठे नु इति वितर्के गोष्ठीषु पुरावृत्तवर्णनरूपासु तस्य रावणस्य कथा इयन्मितिरूपा काचित्सा ः सती मिथ्या न सत्यैवेत्यर्थः यद्वा तस्य लंकापतेर्वृत्तशीलमिव शीलं येषां तानि मध्यमपदलोपी समासः रजसः प्रकृतेः परं परोरजः परब्रह्म तद्रूपाणि यद्वा तस्य वृत्तानि शीलानि अप्याचरंतीति शेषः ननु महीयान् कथं याचते इति चेत्तत्राह साधारणो निरातंकं कन्यामन्योपि याचते किं पुनर्जगतां नेता सन् पौत्रः परमेष्ठिनः १२ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१३ १४ धनुराकर्षणे रावणशक्तिं द्योतयति काकुत्स्थाद्दशकंधरः माहेश्वरं धनुः क्रष्टुमाक्रष्टुं योग्योस्ति किंभूतः शंभोः आवासस्थानम् अचलं उत्क्षेप्तुं उद्धर्तुं भुज कौतुकी भुजे कौतुकमस्यास्तीति गुरोर्गृह मुद्धर्तुं किं पुनः तद्धनुरिति भावः १५ दशग्रीवो धनुरारोपयत्वालं कां नेष्यति अथवा कश्चिन्नृपः त्वां दूर देशं नेष्यतीति खेद इत्यर्थः श्रुत्वा सीता पुनः खिद्यमाना तदेव पद्यं पुनः पठति कमठपृष्ठकठोरमिति पुनः पठितं पुरोहितः सक्रोधम् १६ हे दुर्मदद्

पुनः रामं प्रति पुरोहितः संमताद्युत्तालैः सुरसहचरीचामरमरुत्तरंगैरुन्मीलद्भुजपरिघसौरभ्यशुचिना स्वयं पौलस्त्येन त्रिभु वनजिता चेतसि धृतामरे राम त्वं मा जनकपतिपुत्रीमुपयथाः १३ जनकः माहेश्वरं धनुः कुर्यादधिज्यं चेद्दाभिताम् पुरोहितः गुरोः शंभोर्धनुर्नोचेच्चूर्णतां नयति क्षणात् १४ जनको विहस्य शंभोरावासमचलमुत्क्षेप्तुं भुजकौतुकी माहेश्वरं धनुः क्रष्टुमर्ह ते दशकंधरः १५ जनक खेदमाह माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः पिनाकारोपणं शुल्कं हा सीते किं भविष्यति १६ सा ईहरेण हरवल्लभया च देव्या हेरंबषण्मुखवृषप्रमथावकीर्णम् कैलासमुद्धृतवतो दशकंधरस्य केयं च ते धनुषि दुर्मद दोः परीक्षा १७

वीरा ग्रह धनुषि दशकंधरस्य दोः परीक्षा भुजबलज्ञानरूपा कान कापि ते तव इयं धनुरधिज्यकरणरूपा परीक्षा कान कापीत्यर्थः किंविशिष्टस्य कैला संगिरिं धृतवतः अन्यत्तु सुगमम् यद्वा किंविशिष्टस्य ते हरेण नैपुण्येन सार्द्धं कैलासं नेतृगुणं उद्धृतवतः उच्चैर्हर्दिधारयतः इदग्ने तानेदगिनिज्ञानव



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तः हरोनैपुण्यरुद्रयोरितिचरकः गुणैर्नेतृगुणेभावे कैलासेस्थो हरेपिचेतिशाश्वतः चपुनः वल्लभयादेव्यासार्द्धं देवीद्योतमाना वल्लभाकार्याकार्यपरी
क्षातयासहेत्यर्थः कार्याकार्यविचारेक्षावल्लभाचजयध्वानिरितिविश्वः किंविशिष्टंनेतृगुणं हेरंबषण्मुखवृषाणाख्याः प्रमथाःविद्यास्ताभिराकीर्णंयु
क्तं हेरंबोगणेशस्तस्यैवाग्रपूज्यत्वं विघ्ननाशाद्यविद्याषण्मुखस्यैवशत्रुसंहारविद्यावृषोधर्मस्यैवलोकपालनमिव एताभिर्युक्त एतद्विशेषणत्र
येणसद्गुणशालित्वातिकल्पत्वरंजितलोकत्वादयोगुणादर्शिताः हरेणहरवल्लभयाचेतिपदद्वयेन विद्याबलत्वमुक्तम् किंतत् हरोरुद्रस्तद्वत् य-
थारुद्रः सर्वंजानाति तथाखिलनेतृगुणान्जानतः तवधनुरुद्धरणमात्रेकापरीक्षेतिभावः १७ जनकोपिपुरोहितमाक्षिप्य स्वप्रतिज्ञातंरा

जनकः श्रृणुतजनककल्पाः क्षत्रियाः शुल्कमेतेदशवदनभुजानांकुंठितायत्रशक्तिः नमयतिधनुरैशंयस्तदारोपणेन
त्रिभुवनजयलक्ष्मीजानकीतस्यदाराः १८

ज्ञः श्रावयति जानकीजनएवजनकः जनानांसमूहोजानकं जानकमस्यास्तीतिजान
कीजनसमृद्धिमान् अन्यथासीतावर्णनेनवैरस्यत्वमायाति अतोजानकीपदेनजनकएव एतेनैतस्यनिर्भयत्वंसूचितं भोक्षत्रियाः श्रृणुत किंवि-
शिष्टाजनककल्पाजनकोरुद्रः बलेनततः किंचिन्न्यूनाइत्यर्थः लोकरुद्रनृपव्याजतातेषुजनकःप्रमाणितिधरणिः शुल्कमितिपाठेजनकस्यमम
शुल्कंपणंश्रृणुत तमाह यत्रधनुषिदशवदनभुजानांशक्तिः कुंठिताजातातदैशंधनुः कोपिनमयति तदारोपणेनैवमैथिलीनस्यतदारोपणक

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्तुः दाराः स्यात् दारशब्दो भूम्न्येव किंविशिष्टा त्रिभुवनजयलक्ष्मीः यस्यासौ त्रिभुवनंजितं भवतीति भावः धनुरारोपणेन तद्धासिजनावनात् १८
इत्युक्ते श्रीरामः सर्वतोवलोक्य तदुत्थानं नाटयति अत्ररामे चित्ररसः प्रतिपाद्यते धनुःस्थानेतिर्यङ्मुखमुपविष्टायाः जानक्याः कपोले स्मरस्मेरं स
कामस्मितं यथास्यात्तथा वक्त्रकमलं निजमुखारविंद प्रतिबिंबं पश्यन् एतेन मधुररसोदर्शितः किंविशिष्टे कपोले करिकलभः करिशावकस्तस्य दंतयो
र्द्युतिं किंचित् पीतोज्वलतां मुष्णातीति एतेन सीतायाअपि चरमकैशोरत्वमुक्तम् स्वयंवरागतरक्षः सेनाकोलाहलं च शृण्वन् वयं बलाद्धरि-

श्रीरामः कपोलेजानक्याः करिकलभदंतद्युतिमुषिस्मरस्मेरं गंडोड्डुमरपुलकं वक्त्रकमलम् मुहुः
पश्यन्शृण्वन्रजनिचरसेनाकलकलं जटाजूटग्रंथिंरचयतिरघूणांपरिवृढः १९

ध्यामः इत्येवंरूपं एतेन भयानकोदर्शितः जटाजूटसमूहग्रंथिंरचयति अनेन वीररसोदर्शितः व्रतिनस्तु सटाजटेत्यमरः गंडोड्डुमरपु
लकं गंडव्यापकं एतेनोद्भास्वरारव्यः स्निग्धसात्विकोदर्शितः रसत्रयेंपिऊड्डुमरः प्रचंडः परिवृढोधिपः उक्तं मदीयरसोदधौ शबलत्वंहि॰
रसानां सर्वेषामेवजायते यत्र दशमः सोत्रनिरुक्तश्चित्ररसः सर्वरससारः १९ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kālidas Sanskrit University Ramtek Collection

धनुर्द्धरणडंबरेसीताजामदग्न्ययोः शुभाशुभंद्योतयति गृहीतेति पस्पंद अस्फुरत् तदुक्तंवसंतराजे चक्षुर्वामंमृगदृशोजयकारिभृशंत्वरा तदेवपु
रुषस्यारात्स्फुरितंभयशंसनमिति २० इदंहितीयंपृथ्वीभुजंगमंचेतितन्निश्चितयेतस्मिन्निश्चितयेभूभुजंगमकूर्मरूपेदधीषांधर्तुमिच्छांकुरुतेति

गृहीतहरकोदंडेरामेपरिणयोन्मुखे पस्पंदनयनंवामंजानकीजामदग्न्ययोः २० लक्ष्मणः रामेसज्जंधनुः
कुर्वतिसतिपृथ्व्यादीनिभुवनान्यधोयास्यंतीत्याशंक्याह पृथ्विस्थिराभुवभुजंगमधारयैनांत्वकूर्मराजतदिदंद्वि
तयंदधीथाः दिक्कुंजराःकुरुततन्निश्चितयेदधीषांरामःकरोतिहरकार्मुकमाततज्यम् २१ लक्ष्मणःरामं पृथ्वीया
तिविनम्नतांफणिपतेर्नम्रंफणामंडलंबिभ्यत्क्षुभ्यतिकूर्मराजसहितादिक्कुंजराःकातराः आतन्वंतिचबृंहितं
दिशिभदैःसार्धंधराधारिणोवेपंतेरघुपुंगवेपुरजितःसज्जंधनुःकुर्वति २२

२१ अत्रभूतार्थेयातीत्यादिवर्तमाननिर्देशःक
वेस्तात्कालिकानुभवेन फटायांतुफणाद्वयोरित्यमरः बृंहितंकरिगर्जितमित्यमरः पुरजितस्त्रिपुरजेतुरुद्रस्य २२ अथधनुर्भंगेनानारसानुभवाद्विव

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रसंदर्शयितुंपद्यमवतारयति उत्क्षिप्तमिति कौशिकेवत्सलरसोजातः अत्रहर्षः संचारीहर्षोत्पुलकाइतिज्ञानम् भूपेषुभयानकरसः अत्रदैन्यंसंचारीदै
न्यादेवमुखनमनं अत्रभीषणात्रिविधानत्रप्रभावेनैवरामेभीषणत्वंजनकेकरुणारसोजातः अत्रग्लानिः संचारी साचाधैर्जाताआध्यनुभावः संशयइ
तिज्ञानंवैदेह्यांमधुररसोजातः मनआकर्षणमेवात्रानुभावः रामेवीररसः अत्रस्पर्द्धोद्दीपनंपरशुरामागतेतिज्ञानं अत्रसर्वरसानामुद्दीपनविभा

उत्क्षिप्तंसहकौशिकस्यपुलकैः सार्द्धंमुखैर्नामितंभूपानांजनकस्यसंशयधियासाकंसमास्फालितम् वैदेहीमनसासमंच
सहसाकृष्टंततोभार्गवप्रौढाहंकृतिदुर्मदेनसहितंतद्भग्नमैशंधनुः २३ शंभोर्यद्गुणवल्लरीमुपनयत्याकृष्यकर्णांतिकंत्र्यक्षं
तित्रिपुरावरोधसदृशांकर्णोत्पलग्रंथयः स्वंचास्फालयतिप्रकोष्टकमिमामुन्मुच्यतासामहोभिद्यंतेवलयानिदाशरथि
नातद्भग्नमैशंधनुः २४

योरामएव २३ धनुषोमहत्ववर्णनेनरामेमहत्वमवतारयति शंभाविति शंभौरुद्रे यद्गुणवल्लरींप्रत्यंचिकामा
कृष्यकर्णांतिकमुपनयतिसतिनदात्रिपुरावरोधसदृशांकर्णोत्पलग्रंथयः पश्यंति यदात्वइमांगुणवल्लरींउन्मुच्यपरित्यज्यस्वं आत्मीयंप्रकोष्टकंआस्फा
लयति तदातासामेवत्रिपुरसुदृशांवलयानिकंकणानिभिद्यंते तदीदृग्धनुर्दाशरथिनाभग्नमितिमहत्वम् २४ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नन्वत्र तदुत्थानमेव पणः किमर्थं तद्रामेण भग्नमिति चेत्तत्राह नत् ऐशं धनुः रामहस्तत्तीर्थे देहं मुमोच त्यक्तवत् किमर्थं निजपुरश्चरणाय पापप्रणाशार्थं
कथं पापसंभवाना ब्रह्मा च माता च ब्रह्ममातरौ तयोर्वधः तेन पातकिनौ यौ मन्मथारिक्षत्रांतकारिणौ तयोः करसंगमाद्यत्संसर्गपापं तद्भीत्याप्यन्योपि
पापः तीर्थे देहं त्यक्त्वा शुद्धो भवतीति प्रसिद्धम् २५ नत्र तस्मिन्नवसरे त्रुत्यद्भज्यमानं भीमोरुद्रः तद्धनुस्तस्य कठोरः परुषो निनादः सविस्मयं आश्चर्यं

तद्ब्रह्ममातृवधपातकि मन्मथारिक्षत्रांतकारिकरसंगम पापभीत्या ऐशं धनुर्निजपुरश्चरणाय नूनं देहं मुमोच रघु
नंदनपाणितीर्थे २५ त्रुत्यद्भीमकठोरनिनदस्तत्राकरोद्विस्मयं त्रस्यद्वाजिरवेरमार्गगमनं शंभोः शिरः कंपनम्
दिग्दंतिस्खलनं कुलाद्रिचलनं सप्तार्णवोन्मेलनं वैदेहीमदनं मदांधदमनं त्रैलोक्यसंमोहनम् २६

मकरोत् नदेव द्योतयति त्रस्यंते वाजिनो यस्यासौ त्रस्यद्वाजी स चासौ रविश्च तस्य शब्दश्रवणमात्रेण त्रस्ताश्वस्य रवेरमार्गगमनं अकरोदिति सर्वत्रानु
वध्यते सप्तार्णवानां उच्चैराकाशमेलनं ऐक्यतां न तु भूमौ तथा सति भूलयः स्यात् एतत्पद्येनाद्भुतरसो दर्शितः उक्तं च मदीयरसोदधौ यामोचि
तैर्विभावैः पुष्टिं याता रतिर्हि विस्मयजा रसोद्भुताख्यः सः स्यात् पूर्णोपि स्याद्विभावोत्र २६ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तमेवाद्भुतरसंविशिनष्टि रुंधन्निति आर्योरामस्तस्यभुजबलेनदलद्भज्यमानोयः कोदंडः धनुस्तस्यकोलाहलः शब्दाडंबरः अयंउन्मीलति प्रकटी
भवति किंकुर्वन् विधेः ब्रह्मणः अष्टश्रुतीः कर्णान्निरुंधन् व्यावृण्वन् अष्टौदिशः मुखरयन् प्रतिध्वनिना वाचालिताः कुर्वन्महेश्वरस्याष्टमूर्तीः क्रोडय
न् व्याकुलयन् तथाचागमे भूर्जलंवन्हिराकाशंवायुर्यज्वाशशीरविः इत्यष्टौमूर्तयः शंभोर्मंगलंजनयंतुनः इत्यष्टौकुलक्ष्माभृतः कुलगिरीन् विस्फो

विंधन्नष्टविधेःश्रुतीर्मुखरयन्नष्टौदिशः क्रोडयन्मूर्तीरष्टमहेश्वरस्यदलयन्नष्टौकुलक्ष्माभृतः तान्यह्नाबधिराणिपन्नग
कुलान्यष्टौचसंपादयन्नुन्मीलत्ययमार्यदोर्बलदलत्कोदंडकोलाहलः २७ गद्यम् जामदग्न्यः त्रुट्यद्भैरवधनुः कोलाह
लामर्षमूर्च्छितः प्रलयमारुतोद्धूतकल्पांतानलवत्प्रदीप्तरोषानलः यद्भंजजनकात्मजाकृतेराघवः पशुपतेर्महद्धनुः नद्धनुर्गु
णरवेणरोषितस्त्वाजगामजमदग्निजोमुनिः २८

टयन् तानाहागमः विजयः कुमुदोनीलोनिषधोहिमवानथ जयंतः कालनिषधोवाहीकोष्टौ
दिग्द्रयः एतेपूजनविधानेपन्नगकुलान्यपितत्रैव नागसर्पोरगाश्चभुजगंदंदशूकविजत्यगोमायिकामृतपालेयशेषारख्याश्चाष्टजातयः सर्पेतिप्रोदितः -
सर्वेषुपंकजंयथास्थलजेष्वपिकमलमितिभिंदन् भूतलमितिपद्यमत्रकेचित्पठंति तत्प्रक्षिप्तमस्तिरुंधन्नित्यनेनैकार्थत्वात् २७ २८



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुनिराजगामेतिपूर्वेणसंबंधः पृष्ठतस्तूणीद्वयंनिषंगयुग्मंधत्ते एतेनसर्वेद्वितीयांतंयोज्यं रुरुश्चित्तलोमृगः मंजिष्ठयारक्तंमांजिष्ठकंवासः उक्तंच ब्रह्मव्रतध
रोवासोवसानोरक्तमुत्तममितिपाराशरः किंविशिष्टोमुनिः दंडः अर्शआदिभ्योऽच् प्रशस्तो दंडोस्यास्तीति दंडः ब्रह्मव्रतेपिदृप्तत्रदमनेपि पुनः किंविशिष्टः नक
श्चिसरः श्रेष्ठोयस्मात्सः अपरः पुनः पैप्पलः पिप्पलोब्रह्मसूत्रमस्यास्तीति पैप्पलः स्वार्थेतद्धितः अर्शआदिभ्योच् यज्ञोपवीतवान् इति अश्वत्थेब्रह्मसूत्रेच

चूडाचुंबितकंकपत्रमभितस्तूणीद्वयंपृष्ठतोभस्मस्निग्धपवित्रलांच्छितमुरोधत्तेत्वचंरौरवीम् मौंज्यामेखलयानियं
त्रितमधोवासश्चमांजिष्ठकं पाणौकार्मुकसाक्षसूत्रवलयंदंडोपरः पैप्पलः २९ पित्र्यमंसमुपवीतलक्षणंमातृकंचधनु
रूर्जितंदधत् यः ससोमइवधर्मदीधितिः सद्विजिव्ह इवचंदनद्रुमः ३०

पिप्पलोस्त्रीगुणेष्वपिइतिधरणिः दंडंपरंपैप्पलमितिपाठे-
अश्वत्थस्यदंडंधत्ते बिभृयात्पैप्पलंदंडंब्रह्मव्रतधरः सदेत्युक्तत्वात् अपरः पैप्पलंदंडंधत्तेइति वा अर्थः समुच्चयोयमलंकारः पदार्थानामनेकेषांयत्रैक-
स्मिन्निबंधनं एकयाक्रियया विज्ञैः सप्रोक्तोतिसमुच्चयः वैरिणोरपिवीरशांतरसयोरत्र युक्त्यायोजनंअदोषाय युक्त्याकृतोपिसंयोगस्तयोर्बाधंनदु
ष्यतीत्युक्तत्वात् २९ ३० आजन्मेति एवंभूतोजामदग्न्यः संप्राप्त इत्यन्वयः पृथुलौमांसलौभुजावेवशिलास्तंभौतयोर्विभ्राजमानायाज्याघात

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्रेणीप्रत्यंचिकास्फोटनपंक्तिः तस्याः संज्ञयासूचनेनोत्तारितास्त्रिस्मिन्विज्ञापितापृथ्वीचक्रस्यविजयस्यप्रशस्तिर्येनसः नामसूचनयोःसंज्ञेतिविश्वः वक्षः
पीठेपृषत्कान्बाणान् संक्ष्णुवानः तीक्ष्णीकुर्वाणः घनानियानि अस्त्राणि तेषांव्रणैः यः किणः मांसासृग्विवर्तः तेनकठिनेमांसासृग्भरणंकिणः इतिध
रणिः क्षत्रियाएववनगजास्तद्धननार्थैयामृगयातस्यांकौतुकमस्यास्तीति ३१ एवंभूतमेनंदृष्ट्वालक्ष्मणः रामंस्मारयति हेराम अयंसोस्तिसकः यः
भैरवसंगरे अतिभयंकरेरणेउद्धतं अनम्रंयथास्यात्तथाकुठारेणपरशुना अर्जुनस्यराज्ञः कंठंछित्वापूर्वंमूलादुत्कृत्य पश्चात्जगात् वेगेन बाहुसहस्रं

आजन्मब्रह्मचारीपृथुलभुजशिलास्तंभविभ्राजमानज्याघातश्रेणिसंज्ञांतरितवसुमतीचक्रजैत्रप्रशस्तिः वक्षःपीठे
घनास्त्रव्रणकिणकठिनेसंक्ष्णुवानःपृषत्कान्प्राप्तोराजन्यगोष्ठीवनगजमृगयाकौतुकीजामदग्न्यः ३१ सोयंसप्तसमुद्रमुद्रि
तमहीयस्यार्जुनस्योद्धतंछित्वाभैरवसंगरेतिजरठंकंठंकुठारेणयः रेवातीरनिरोधहेतुगहनंबाहून्सहस्रंजगान्कांडंकांड
मखंडयत्पितृवधामर्षेणवर्षीयसा ३२

कांडंकांडंअखंडयत् नन्वर्जुनोल्पबलइतिचेत्तत्राह सप्तभिःसमुद्रैःमुद्रितावेष्टितावसुमतीमही-
तस्याःपालकस्यकिंविशिष्टंकंठंअतिजरठंअतिकठोरं समौजरठकर्कशावितिविश्वः कीदृक्बाहुसहस्रंरेवानर्मदानदीतीरनिरोधायहेतुभूतंगहनंस्त्रीभिःक्री
डन्येनभुजसहस्रेणसरित्प्रवाहमेवारुणत् तद्भुजसहस्रंकेनहेतुनाअखंडयत् वर्षीयसावृद्धिंगतेनपितृवधजन्यक्रोधेनेत्यर्थः ३२



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रामंस्मारयित्वापुनस्तत्परशुंस्मारयति येनेति यस्यपरशूरामस्यासौकुठारोविश्रुतः सर्वतोविख्यातः सोयमितिपूर्वेणैवसंबंधः असौकः येनकुठारेणस्त्री
बालवृद्धावधिस्त्रियश्चबालाश्चवृद्धाश्चतत्सर्वंतंयद्धननविधानंतस्मिन्प्रवृत्तेसतिभूरिच्युतरुधिरसरिद्वारिपूरेअभिषेकः सर्वंहननव्रतपूर्तिस्नानंअकारिकृ
तंभूनांकावार्तेतिभावः किंविशिष्टेवारिपूरेनृपाणांयावद्धीवसामांसंचमस्तिष्कंमेदूइतिभाषायांतेषांप्राग्भारः संमर्दोयस्मिन्शीषण्यमांसोमास्तिष्कमितिवि

येनत्रिः सप्तकृत्वोनृपबहलवसामांसमस्तिष्कपंकप्राग्भारेकारिभूरिच्युतरुधिरसरिद्वारिपूरेभिषेकः यस्यस्त्रीबालवृद्धाव-
धिनिधनविधौनिर्दयोविश्रुतोसौराजन्योच्चांसकूटक्रथनपटुरटत्घोरधारः कुठारः ३३ गद्यं जामदग्न्यः क्रोधंनाटयित्वाहके
नेदंकुपितकालदंतपत्रांतरालमिच्छताधनुर्भग्नंरामः साशंकम् पार्वत्यानिजभर्तुरायुधमितिम्लानंयदभ्यर्चितंनिर्मोकेनचवासु
केनवलितंयत्सादरंनंदिना भव्यंयत्त्रिपुरेंधनंधनुरिदंतन्मन्मथोन्माथिनः सत्येवंमयिरामनामनिभुविद्विधाकृतंदृश्यते ३४

श्वः प्राग्भारव्रजसंमर्दाइत्यपि किंविशिष्टः कुठारः राजन्यानांउन्नतांसाएवकूटाः गिरयः तेषांक्रथनेदारणेपटुःआरटंतीघोराधारायस्यसः क्रथनोज्जासनी-
त्यपीत्यमरः ३३ भोमुने मन्मथोन्माथिनः रुद्रस्यतद्धनुः मय्येवमामुपश्लिष्यमामासाद्यद्विधाकृतंमध्यतोभग्नंदृश्यते औपश्लेषिकोयमाधारः भुविएवंस
तिभूमौएवंधनुर्भग्नंकृत्वासतिवर्तमानेअन्यत्सुगमम् समोनिर्मोक कंचुकोम्लानंशत्रूणांहर्षकारित्रिपुरइंधनंदात्यंयस्यतत् ३४

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ध्मातः स्तोमः समूहोस्त्री अन्यत् सुगमम् छूनेनफूत्कारेण प्रफुल्लाभ्यां नासापुटाभ्यां नासाविवराभ्यां उद्गीर्णोबहिर्भूतः प्रभूतोमहान्गर्वो अहंकारो यस्य तादृश रोषानल एव कालकूटं विषं तस्य धूमस्तोमेनाच्छादितमावृतं दिशां मंडलं समूहो येन की दृ॑ शांतरात् ३५ अरेरे इत्याक्षेपे अकांडमनवसरं प्रचंडौयोदोर्दंडौ

जामदग्न्यः स्फीतफूत्कारप्रफुल्लनासापुटकोटरोद्गीर्णप्रभूतगर्वानलोच्छलितकालकूटधूमस्तोमाच्छादितदिङ्मं डलः ३५ अरेरे निजकुलकमलिनीप्रालेयवर्षदाशरथे कथमकांडमदांतप्रचंडदोर्दंडकोदंडखंडनचंडिमाडंबरेणापूरि तं जगत्त्रयम् सकलवसुमतीमंडलाखंडलकुमुदिनीपक्षलक्ष्मीहरणकिरणमालिनं न मां वेत्सि येनोक्तः कार्तवीर्यः ३६ सहस्रबाहुस्त्वमहं द्विबाहुस्त्वं सैन्ययुक्तोस्यहमेक एव त्वं चक्रवर्ती मुनिनंदनोहं तथापि नोपश्यतु तर्कमर्कः ३७

तयोः कोदंडखंडनरूपोयश्चंडिमा चंडत्वं तदाडंबरेण जगत्त्रयं कथमापूरितं कांडोस्त्री दंडबाणार्ववर्गावसरवारिषु इत्यमरः जातं मां त्वं न वेत्सि किंभू तं सकलवसुमती पृथ्वी तस्याः मंडलस्य ये आखंडला इंद्राः राजानस्त एव कुमुदिन्यस्तासां पक्षस्य या लक्ष्मी राज्यादिरूपा तन्हरणे सूर्यं तं कं येन कार्तवीर्यो नृप इत्युक्तः ३६ नदेवाह तर्कन्यायं शेषं सुगमम् ३७ ५ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हेमंदकार्याकार्यमूढमेस्वभावः सर्वभूतैर्नविदितः नज्ञातोन अपितुविदितएव अहोयद्भवतानज्ञातस्तदाश्चर्यमित्यहोपदेनध्वनितंस्वभावमेवद्योतयति किंविशि

ष्टस्यमे क्षत्रसंतानेयोरोषस्तस्मात् गर्भानपिउत्कृत्यउद्दाम्नि: सार्यशकलयितुंखंडयितुंउद्दामस्यगतदयस्यपुनः सर्वतः सर्वान्स्त्रीवृद्धतरुणरूपपुरुषान् राज्ञां

वंशेषुजातान्क्षत्रियान् एकविंशत्यवधिएकविंशद्वारंविशसतः घातयतः पुनः पित्र्यंपितॄणामिदंपित्र्यंतर्पणादिप्रयोगेद्वितीयामंदायमानः क्रोधाग्निर्यस्यय

उत्कृत्योत्कृत्यगर्भानपिशकलयितुंक्षत्रसंतानरोषादुद्दामस्यैकविंशत्यवधिविशसतः सर्वतोराजवंशान् पित्र्यंतद्रक्त

पूर्णप्रतिवचनमहोमंदमंदायमानक्रोधाग्नेः सर्वतोमेसखलुनविदितः सर्वभूतैःस्वभावः २८ आश्चर्यंकार्तवीर्यार्जुन

भुजविपिनच्छेदलीलाविदग्धः केयूरग्रंथिरत्नोत्करकषणरणत्कारघोरः कुठारः तेजोभिः क्षत्रगोत्रप्रलयसमुदित

द्वादशार्कानुकारः किंनप्राप्तः स्मृतिंतेस्मरदहनधनुर्भंगपर्युत्सुकस्य २९ थापित्र्यमकरवंतथातथाशांतक्रोधोऽभवमितिभा

वः किंविशिष्टं सर्वतः इतिसर्वंयथास्यात्तथा तद्रक्तपूर्णप्रतिवचनंतेषांक्षत्रियाणांरक्तेनपूर्णंनिष्पादितप्रतिवचनंप्रतिकरणीयंयस्मिन्तत् यत्तिलकु

शयवादिसूचकंवचनंतद्रक्तेनैवसंपादितमितिभावः एवंभूतोपिभवतानज्ञातस्तदाश्चर्यम् ३८ पुनराश्चर्यमनुवदति हेराम मदीयः कुठारः ते

नवस्मृतिंस्मरणविषयंनप्राप्तः किंप्राप्तएव मामनादृत्यैतत्कृतमितिभावः ममानादरणमेवाश्चर्यम् किंविशिष्टः कुठारः कृतवीर्यस्यापत्यंकार्तवीर्यः सत्ता

OC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सोऽर्जुनश्च तस्य भुजा एव विपिनं तस्य कीर्तनलीलायां विदग्धः पुनः तेजोभिरुग्रः दुष्प्रेक्ष्यः अन्यत्सुगमं कर्षणं घर्षणं समइतिधरणिः बहुलत्वमुत्करोव्रात
इत्यपि ३९ बाह्वोरिति त्र्यंबको रुद्रस्तस्येदं धनुस्त्रैयंबकम् तनिमेति वा पाठः तत्र तनोर्भावः तनिमा निःसारत्वमिति डिंभो माणवकः शिशुरिति विश्वः
एतेन धनुर्भंगस्येषत्करत्वं कथितम् ४० इदानीं गर्भिताक्षेपमाविष्करोति अयमिति सुगमम् ४१ पुनरपि सवैदग्ध्यमाक्षिपति भो ब्रह्मन्निति ४२ इ

रामः सभयम् बाह्वोर्बलं न विदितं न च कार्मुकस्य त्रैयंबकस्य महिमा न तवापि सैषः तच्चापफलं परशुराम मम क्षम
स्व डिंभस्य दुर्विलसितानि मुदे गुरूणाम् ४० अयं कंठः कुठारस्ते कुरु राम यथोचितम् निहंतुं हंत गोविप्रान्न शूरा रघु
वंशजाः ४१ भो ब्रह्मन्भवता समं न घटते संग्रामवार्तापि नो सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि यस्मादेक
गुणं शरासनमिदं सुव्यक्तमुर्वीभुजामस्माकं भवतो यतो नवगुणं यज्ञोपवीतं बलम् ४२ जातः सोऽहं दिनकरकुले क्षत्रि
यश्श्रोत्रियेभ्यो विश्वामित्रादपि भगवतः प्राप्तदिव्यास्त्रपारः अस्मिन्वंशे कथय तु जनो दुर्यशो वा यशो वा विप्रे शस्त्र
ग्रहणगुरुणः साहसिक्याद्बिभेमि ४३

एवं ज्ञातं दिव्यास्त्राणां पारमंतो येन स विप्रे विषये शस्त्रग्रहणं गुरुभारो यस्मिन् तादृशात्सा
हसिक्यात् श्रोत्रियेभ्यः वेदाध्ययनाग्निहोत्रादि कर्मणा श्रेष्ठेभ्यः सुगमम् ४३ ७ ७ ७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

४४ किंचित्क्षुब्धं ज्ञात्वा पुनस्तौति स्त्रीष्विति प्रवीरजननी प्रकृष्टशूरमाता एवपदेन नान्या कुत एवं इत्यपेक्षायामाह यस्यै तव जनन्यै गिरिजा स्पृहयांबभूवेति-
अहं चेदृक्पुत्रमाता स्यामिति स्पृहायां हेतुमाह त्वद्दोर्वशीति विशाखः शिखिवाहनः स्कंदो यदा क्रौंचगिरिजयार्थं गतस्तदा परशुना युद्धे पराजित इति ४५

परशुरामः साभ्यसूयम् येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वा सवस्वादाभिज्ञ परश्वधेन विद्धे निःक्षत्रिया मेदिनी
यद्बाणव्रणवर्त्मना शिखरिणः क्रौंचस्य हंसच्छलाद्द्याप्यस्थिकणाः पतंति स पुनः क्रुद्धो मुनिर्भार्गवः ४४ स्त्रीषु प्रवीरज
ननी जननी तवैव देवी स्वयं भगवती गिरिजापि यस्यै त्वद्दोर्वशीकृतविशाखमुखावलोकव्रीडाविदीर्णहृदया स्पृहयांब
भूव ४५ हारः कंठे विशतु यदि वा तीक्ष्णधारः कुठारः स्त्रीणां नेत्राण्यधिवसतु सुखं कज्जलं वा जलं वा संपश्यामो ध्रुवम
पि सुखं प्रेतभर्तुर्मुखं वा यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ४६ परशुरामः तथापि साभ्यसूयं यच्चापमीशभुजपीडन
पीतसारं प्रागप्यभज्यत भवांस्तु निमित्तमात्रम् राजन्यकप्रधनसाधनमस्मदीयमाकर्ष कार्मुकमिदं गरुडध्वजस्य ४७
रामोपि धर्षणामर्षमूर्च्छितः
४६ पूर्वं गरुडध्वजस्य इदानीमस्मदीयं इदं कार्मुकं आकर्ष रणो नाप्रधनं युद्धमिति धनंजयः ४७ आ
कृष्टे धनुषि मुनिधर्षणा अनाकृष्टे मम पराजय इति धर्षणामर्षौ ताभ्यां मूर्च्छितः पुर इति अद्यप्रभृति रामः परशुरामः मम पुरो जन्मा ब्राह्मणो न पराजय हे

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तुल्वात् स्वयमप्यहं रघुकुलजातानां राज्ञां पुत्रः पौत्रो वा न ब्राह्मणावमानन हेतुत्वात् तेषां तदभावात् अतोयं भूलोकस्थो जनः अयं कौतुकार्थं आग-
तोपि देवादिगणः मां वीरं कलयतु जानातु अवीरं वा न शौर्यं ब्राह्मणो हि मे इत्युक्तत्वात् मया दुष्टस्यास्य द्विजस्य दमनदीक्षायां परिकरः कटिस्थ वस्त्रग्रं-
थिर्बद्धोस्ति स्यात्सज्जत्वं परिकर इति विश्वः ४८ एतन्मनसि विचार्य तत्तुल्यः पुनरपि शांत्यैव वदति भूमात्रमिति प्रकरणार्थः सुबोध एव कटाक्षमुप
क्षिपति यदा तत्र विजये लाभत्रयमस्ति तदैश्वर्यग्रहणं आत्मजयघोषणं शत्रुहननं चेति तेषां तु तस्य राजयेकिमपि नास्तीत्याह यत् भूमात्रं न त्वन्ये लोका-

पुरो जन्मानाद्य प्रभृति मम रामः स्वयमहं न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम् अवीरं वीरं वा कलयतु जनो मामय
मयं मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ४८ भूमात्रं कियदेतदर्णवमितं तन्निर्जितं हार्यते यद्वीरेण भवादृशेन ददता
त्रिःसप्तकृत्वो जयम् डिंभो यन्नवबाहुरीदृशमिदं घोरं च वीरव्रतम् तत्क्रोधाद्विरम प्रसीद भगवन् जात्यैव पूज्योसि
नः ४९

स्तत्राप्यर्णवमितं न तु सर्वा भूः तत्रापि भवादृशेन वीरेण त्वादृशेन शूरेण तत्रापि त्रिःसप्तकृत्वः न त्वेकवारं निर्जितं तत् हार्यते
त्वया त्याज्यते आदाय गृह्यत इति एतत् कियत् न कियदिति तदपि भूमात्रं तव नास्तीति भावः किंविशिष्टेन अवीरेण जित्वा ब्राह्मणेभ्यो ददता एतेन ऐश्वर्य
ग्रहणमपि नास्ति तर्हि जयो भविष्यति सोपि नास्तीत्याह अयं लक्ष्मणो जनः नवबाहुस्तरुण इति त्वं तु डिंभो वृद्धः डिंभो स्त्री बालवृद्धयोरिति विश्वः



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वीरव्रतं ईदृशं घोरं बालवृद्धोपरि त्यक्त्वा सास्त्रं हन्यान्न चक्रकमिति राजनीतौ कीदृशं वीरव्रतं अजयं वृद्धजये ष्वजयमेवेत्यतो जयोपि नास्ति यथा कथंचित्
अस्तु ग्रैरिपुं हन्याद्विचक्षणः इति वाक्याद्वृद्धोपि हंतव्यश्चेत्तत्राह त्वं नोस्माकं जात्यैव ब्राह्मणजात्यैव पूज्योसि न क्षात्रेण अतः पूज्ये वधाभावः तस्मात्त्वं क्रोधाद्वि
रम प्रसीदच आत्मवधेनास्मभ्यमयशो मा देहीत्यभिप्रायः संकरोयमलंकारः इत्युक्तेप्युत्कटमात्मक्षात्रपणसाफल्यं श्रावयति ४९ द्विः शरमिति सुगमम् ५०

द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान् द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते ५० रामस्तदादाय धनुः सहे
लं बाणं गुणे योज्य यदा चकर्ष भाति स्म साक्षान्मकरध्वजः स्वर्गतिं प्रचिच्छेद च भार्गवस्य ५१ तच्चापमाकर्षति ताटकारा
वाकर्णमाकर्णविशालनेत्रा सासूयमैक्षिष्ट विदेहजा सौ कन्यां किमन्यां परिणेष्यतीति ५२ भार्गवः सानुनयम् पःका
र्नेवीर्यस्य भुजासहस्रं चिच्छेद वीरो युधि जामदग्न्यः स सायके रामकराधिरूढे ब्राह्मण्यदैन्यप्रणयी बभूव ५३

मकरध्वजः कामरूपः स्वर्गगमनं अत्रेयं कथा रामस्य बाणो निरर्थको न स्यात् चेन्मुनये त्यजति तर्हि ब्राह्मणवधः स्यात् भूमौ चेत्तर्हि भूतपीडा स्यात्
एतत् ज्ञात्वा परशुरामस्य स्वर्गगमनमवचिच्छेदेति भावः ५१ तदाकर्षणे सीतावृत्तमाह तच्चापमिति तच्चापं तस्य मुनेश्चापं ताटकारातिपदेन रामस्य
स्त्रीषु निर्दयत्वमारोपितं सीतया अन्यस्त्रीपरिणयनेन ताटकावन्ममापि मरणं स्यादिति भावः ५२ भार्गवः सानुनयं पूर्वार्द्धे मुनिशौर्यकीर्तनेन रामशौ

GC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

योधिक्यं द्योतितम् अनौद्धत्यं तु ब्राह्मणस्वभाव एवेति द्योतितं ब्राह्मण्यं ब्राह्मणस्वभावश्चेदं दैन्यं प्रणयो स्याजीति ५३ इदानीं मुनिः श्रीरामं स्तौति धावद्धू
र्जटीति यद्ययं देवो रामो न प्राभविष्यत् नावतरिष्यत् तर्हि अस्यां भूमौ पदंकः अधास्यत् कुतो नाधास्यदित्यपेक्षायामाह धावन् सत्वरं व धार्यैत्वरमाणः यो धूर्जटेः
रुद्रस्य धर्मपुत्रः शिष्यः तस्य यो परशुस्तेन क्षुण्णा या अखिलक्षत्रश्रेणी पंक्तिः तस्याः शोणितेन पिच्छला आच्छादिता वसुमती जातेति शेषः रुद्रशिष्यत्वेन संहार

धावद्धूर्जटिधर्मपुत्रपरशुक्षुण्णाखिलक्षत्रियश्रेणीशोणितपिच्छिलावसुमतीकोस्यामधास्यत्पदम् त्रैलोक्याभयदानदक्षि
णभुजावष्टंभाद्दिव्यो द्दयो देवो यं दिनकृत्कुलैकतिलको न प्राभविष्यद्यदि ५४ रामः पश्चाज्जामदग्न्यचरणकमलयोर्निपत्य उत्स
त्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुर्वीर्यं तत्तु न यद्गिरामनुपथं व्यक्तं हि तत्कर्मभिः त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याज-
दानावधिः सत्यब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम् ५५

कत्वं सूचितम् प्रवीणदक्षिणो विज्ञ इति विश्वः उत्तंभने रवौ विष्टाववष्टंभस्त्रियामयेत्यपि अत्र सूर्य उत्तंभनं वा अन्यत्सुगमम् ५४ उत्पत्तिरिति सत्यं य-
थार्थभाषणं ब्रह्म वेदः तपः कायक्लेश एतानि निधीयंते यस्मिन् तत्संबुद्धौ हे सत्यब्रह्मतपोनिधे भगवतः पूज्यस्य तव लोकोत्तरं लोकेभ्यो तिरिक्तं किं किं न-
अपि तु सर्वमेवास्ति न देव द्योतयति जन्म गुरुर्वीर्यत्यागैस्त्वादृशः कोपि नास्तीति ध्वनितम् अन्यत्सुगमम् ५५ परशुरामः सदयम् प्रमदया स्त्रिया प्रता



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रितापलोभिनावंचितामतिर्यस्य भरतानांभरतवंशयानांराज्ञांश्रियंभारतश्रियमितिवक्तव्येवृद्ध्यभावआर्षः भरतस्यदोःष्मंतेः श्रियंवाअविधिना
धर्मयुद्धविद्याभावेनयोदुर्नयोन्यायोराजते तस्यव्याषेधार्थेश्रीरामस्यतवभृत्येमयिपरशुरामेस्थितेसतिसनकोपीत्यर्थः कीदृशेअधिज्यंधनुर्य-

मातान्नानशिशोर्वचांसिकुरुतेदासीजनोक्तानियाकस्तातः प्रमदाप्रतारितमतिर्जानातिकृत्यंनयः कश्चा
यंभरतश्रियामविधिनायोराजतेदुर्नयोव्याषेधार्थमधिज्यधन्वनिमयिश्रीरामभृत्येस्थिते ५६ ज्ञात्वावतारं
रघुनंदनस्यस्वकीयमालिंग्यततोवगादम् विन्यस्यतस्मिन्जमदग्निसूनुस्तेजोमहत्क्षत्रवधान्निरुन्नः ५७
निःसाणमर्दलरसालगभीरभेरीझंकारतालरवकाहलनादजालैः पूर्णंबभूवधरणीगगनांतरालंपा-
णिग्रहेरघुपतेर्जनकात्मजायाः ५८

स्यतस्मिन्निति अयंक्षेपश्लोकः टीकांतरात् ५६ महत्तेजऐश्वर्यंक्षात्रंवाअन्यत्सुगमम् ५७ निःसाणेति रसालगोमुखवावस्त्रीकाहलः-
संकरध्वनाविति विश्वः निःसाणोवाहिनीवाद्यविशेषः ५८ ७ ७ ७ ७ ७

GC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रामेइति प्रवराः देवाः प्रकृष्टोवरोयेभ्यः तेनतत्पूर्वं स्वर्गस्त्रीसमूहानामितिनेत्रश्रेणीपद्मानियस्मिन्तादृशेमुहूर्तेरमयतीतिरमणः सचासौरतिपतिश्चतद्धाण भिन्नासतीयोगनिद्रांगताइवआसीत् एतेनदिग्धप्रलयसात्विकोदर्शितः उक्तंचरसोदधौ सुखदुःखाभ्यांचेष्टाज्ञानविलपनंयदानदाप्रलयइतिकिंविशिष्टं तत्पाणिस्पर्शसौख्यं सच्चिदानंदरूपमोक्षसुखांतरगमिति ५९ वैवाहिकमिति सलक्ष्मणोरामएतैः कुशिकनंदनादिभिः कृत्वावैवाहिकंविधिं समा-

रामेश्यामेसकामेस्पृशतिजनकजापाणिपद्मंप्रदत्तंपित्रानेत्रालिपद्मेप्रवरपुरवधूमंडलानांमुहूर्तं तत्पाणिस्प र्शसौख्यंपरमनुभवतीसच्चिदानंदरूपंतत्रासीद्धाणभिन्नारमणरतिपतेर्योगनिद्रांगतेव ५९ वैवाहिकंकुशिक नंदनजामदग्न्यवाल्मीकिगौतमवसिष्ठपुरोहितायैः रामोविधिंसहसमाप्यसलक्ष्मणस्तैरानंदयन्जनकजांस्वपु रंजगाम ६० इतिश्रीहनुमन्नाटकेप्रथमोंऽकः १

प्यतैः कुशिकनंदनादिभिः सहस्वपुरींजगामेत्यन्वयः सलक्ष्मणइतिपदेनसीतानुजयोर्मिलयालक्ष्मणस्यापिविवाहोद्योनितइतिध्वनितम् ६० इति श्रीमिश्रमोहनदासविरचितायांहनुमन्नाटकदीपिकायांजानकीस्वयंवरोनामप्रथमोंऽकः १ ६ ६ ६ ६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अथतयोस्तत्र संभोगमधुरंद्योतयितुंपद्यमवतारयति प्राप्येति प्रथमयामस्तुप्रवेशकौतुकेननीतस्तदग्रेयामत्रयं कथमपिनीत्वाकथमपत्र हेतुमाह मारनाराच
भिन्नइति अन्यत्सुगमम् किमित्येतस्यार्थंकविरेवद्योतयति तत्रनास्मद्दोषः १ सर्वेति मेदुरंस्निग्धचित्रयोरितिधरणिः बलात्सीतामेदुरेचित्रेतुरगां
स्ताडयामास रामस्तुमंदुरायां वाजिशालानुमंदुरेत्यमरः मेदुरंचमंदुराचेतिद्वंद्वैक्यम् एतेनोन्मादावस्थाद्योतितासोक्तारसोदधौ प्रौढा नंदायत्तो विरहाद्यो

श्रीराम प्राप्यायोध्यांस्वजनपरमोत्साहसंभावनाभिर्नत्वामूर्ध्नाखिलगुरुजनंसीतयालक्ष्मणेन रामोयामत्रयमपि
कथंमारनाराचभिन्नोनीत्वासीताकिमितितुरगास्ताडयामासदंडैः १ सर्वलक्षणोपेतान् देवभूपालयोग्यान् मेदुर
मंदुरायांतुरगानवलोक्यमारज्वराकुलितचित्तभ्रांत्यावधूपुत्र्योर्भगत्वावलोकनायागतस्यभगवतस्तरणेः किरणमा
लिनस्तुरगाइमेस्वभावतेजस्विनस्ताडनमसोढारस्ताडिताःपुनःपुनः भगवंतंभास्करंद्रुतगत्यास्ताचलंनयंत्विति बुध्वा
दाशरथिर्जनकपुत्रीचदंडाघातैस्तुरगान् ताडयामासनिशायांप्रौढायांशीघ्रमावयोःसंगमोभवत्वित्यभिप्रायः २

तद्भ्रमः उन्मादः २ अथतयोः रतिग्रहप्रवेशमाह अस्तमिति मुकुलितायाः नलिन्याः बांधवेविकासहेतौ सूर्ये अस्तंयाते सति प्राचीभागेपूर्वदिग्भागेऽम
मदं यथास्यात्तथा सिंधुपुत्रेचंद्रेउदितेसतिरामंनंदयंतीजगामकामं अनिशम् अकामानुमतौकामःस्पृहायामपिसंमतइतिधरणिः एतेनत्रपाद्योतिता-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सुंदरं राममंदिरं वा उक्तं च कलाविलासे रम्यपक्षिरवानंदं नवचित्रकुलाकुलं स्रक्तांबुलाहंशयनं गृहं सुरतसुंदरम् ३ पुनरपि सिंहावलोकनन्यायेन चंद्रो
दयमाविः करोति प्राचीभागेइति तरणिविरहिण्यपिप्राचीभागेसरागेसति एतेनचंद्रदर्शनात् सत्योपिस्त्रियः परपुरुषानुरागंकुर्वंतीतिध्वनितं यतः पूर्वायाः

अस्तंयाते मुकुलनलिनीबांधवे सिंधुपुत्रे प्राचीभागेप्रमदमुदितेपक्वनारिंगपिंगे रामंकामं गुरुजनगिरामंदिरंसुदरंस्वं रंभोरू स्तं
जनकतनयानंदयंतीजगाम ३ प्राचीभागेसरागेतरणिविराहिणिक्रांतमुद्रेसमुद्रे निद्रालीनीरजालौविकसितकुमुदे निर्विका
रैचकोरे आकाशेसावकाशेतमसिशमभितेकोकलोकेसशोके कंदर्पेनल्पदर्पेवितरतिकिरणान्शर्वरीसार्वभौमः ४ भविष्ये
रामशापेल्यंतनिकटवर्तिनिकोकलोकानामकस्मान्महोत्पातनिमित्तंपार्श्वस्थितानामपिप्रियाणामनवलोकनः शोकसंभवः-
स्वैरंकैरवकोरकान्विदलयन्यूनांमनः खेदयन्नंभोजानिनिमीलयन्मृगदृशांमानंसमुन्मूलयन् ज्योत्स्नांकंदलयन्तमः कव
लयन्नंभोधिमुद्वेलयन् कोकानाकुलयन्दिशोधवलयन्निंदुः समुज्जृंभते ५

दिशस्तरणिरतिप्रियस्तथापि सरागाजातेतिभावः यत्रोदेतिरविः सैवप्रियातस्याश्वसः प्रियइत्यागमोक्तत्वात् सावकाशइतिग्रहादिदर्शनमेवतत्रावकाशः
तमसिशमंनाशंगतेसतिकोकाश्चक्रवाकास्तेषांलोकेसमूहेशर्वरीसार्वभौमइतिशर्वरीभूपतिश्चंद्रइति ४ ननुकोकानांकुतः शोकइत्यपेक्षायामाह भवि




CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ष्येइतिगद्यम् पुनश्चंद्रमेवविशिनष्टि स्वैरमित्यादिश्चतुर्भिः युवत्यश्चयुवानश्चयूनस्तेषांयूनांअत्रैकशेषः पुमान्स्त्रियेत्यनेन स्त्रियासहोक्तौ पुमान् शिष्यतइति
कंदएवकंदलः स्वार्थेलच् समूहंकुर्वन्नित्यर्थः अन्यत्सुगमम् ५ तत्रोदयेसरागंचंद्रमवलोक्यकविरुत्प्रेक्षते अद्यापीति असौशशी तत्क्षणादेवतदुदय
मात्रादेव फुल्लंतोयेकैरवा स्तएवकोशारवड्ग कोशास्तेभ्योनिः सरंतीया अलिश्रेणी भ्रमरपंक्तिः सैवकृपाणः खड्गः तमाकर्षति प्रसत्यगृह्णातिदिवातत्र-

अपिच अद्यापिस्तनतुंगशैलशिखरेसीमंतिनीनांहृदिस्थातुंवांच्छति मानएषधिगितिक्रोधादिवालोहितः
उद्यद्दूरतरप्रसारितकरः कर्षत्यसौतत्क्षणात्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणंशशी ६

सुप्ताअलयश्चंद्रोदयादेवसर्वेपंक्तीभूयएकदैवनिःसरंतिइतिप्रसिद्धम् कीदृशः उद्यत् उद्गच्छन् इतिक्रोधादालोहितइवइतिकिंएषःमानः सीमंतिनीनां
हृदि अद्यापिमय्युद्यतेसति स्थातुंवांच्छतीति कीदृशोहृदिस्तनावेवतुंगोशैलशिखरेयत्र ६ ७ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रागमुखेस्यपांडुतामुखेक्षते यातस्येति अनंतरं पक्षांतरेशीतकरः अस्तंयातस्यदिनकृतः सूर्यस्यवेषेणरागान्वितोजातः यादृगरुणोरविरस्तिताहृग्भुदयेचं
द्रोप्यभूदितिभावः किंकुर्वन् स्वैरंयथेष्टं कमलिनीं सूर्यप्रियां आलिंगितुं करं किरणरूपं हस्तं योजयन् सन् संप्रतितद्दैवतया कमलिन्याशीतस्पर्शं अवाप्य मुखां
भोरुहे स्वकीयमुखारविंदे युक्ते मुद्रिते सति रुद्धे इत्यपिपाठः कुमुद्वतीवनितयाकुमुदिन्य एवचंद्रकांतातयाकृतं यद्धेलक्ष्यं लज्जातिरेकस्तेन पांडूकृतः रागा-

यातस्यास्तमनं दिनं तरकृतो वेषेणरागान्वितः स्वैरं शीतकरः करं कमलिनी मालिंगितुं योजनम् शीतस्पर्शमवाप्य संप्रतितयाभु
क्ते मुखांभोरुहे हास्येनैवकुमुद्वतीवनितयावेलक्ष्यपांडूकृतः ७ कर्पूरैः किमपूरि किंमलयजैरालेपि किंपारदैरक्षालिस्फटिकां
तरैः किमघटिद्यावापृथिव्योर्वपुः एतत्तर्कयकैरवक्लमहरे शृंगारदीक्षागुरौदिक्कांतामुकुरेचकोरसुहृदिप्रोढे तुषारत्विषि ८ अमृतम
मृतरश्मेर्मंडलस्यानुभूयद्विजचतुरचकोरप्रीतिरंगारकेषु प्रभवतिभवदीयाचेद्विधातुर्विधानंतदिहपुनरपिस्यात्कोन्यथाकर्तु-
मीशः ९
न्वितोपिपीतत्वमागतइतिकेनैवहास्येनैवपरगामिनमेनंदृष्ट्वायत्कुमुदिनीविकसनंतदेवहासः उक्तंच आत्मनश्चरितेयस्यज्ञांतेन्यैर्य
त्रजायते अपत्रपेतिमहतीतद्वैलक्ष्यमुदाहृतम् ७ रामः सखींप्रति कर्पूरैरिति द्यावाभूमीचरोदसीत्यमरः अक्षालिप्रक्षालितं किंदिक्पूर्वासैवकांतान-
स्याः मुकुरेतत्तुल्ये अन्यत्स्पष्टम् ८ अंगारकोरकाशनंचकोरमवलोक्याह अमृतमिति भोद्विजचतुरपक्षिविदग्धचकोर अमृतरश्मेर्मंडलस्यचंद्रबिंब-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्यामृतमनुभूयचेद्भवदीयाप्रीतिः अंगारकेषुप्रभवतितत्तदाविधातुरीश्वरस्यविधानंपुनरप्यन्यथाकर्तुंकः पुमान् ईशः स्यात् नकोपीतिभावः ९ अथपंजर
स्यामंदिरसारिकासखीनांस्वमंदिरगमनायाशिषंपठतिचक्रेति क्षीरसमुद्रात् जन्मप्रादुर्भावोयस्यएवंभूतोदेवश्चंद्रोजयतितमेवविशिनष्टि अंधकारनिचयसे
नायास्फारोविस्तारस्तन्नाशायचक्रंआविष्टलिंगत्वादखंडलंराजहंसइवलोपेप्यत्‌ औणादिकः कुमुदवनवधूनांबोधेविकासेसतिनिद्रायादरिद्रोयस्मा

चक्रक्रीडाकृतांतस्तिमिरचयचमूस्फारसंहारचक्रंकांतासंयोगसाक्षीगगनसरसियोराजतेराजहंसः संभोगारंभकुंभः कु
मुदवनवधूबोधनिद्रादरिद्रोदेवः क्षीरोदजन्माजयतिरतिपतेर्बाणनिर्वाणशाणः १० इत्याकर्ण्यचंद्रमंडलशाणोत्तीर्णौरतिपते
र्बाणौजानकीरामचंद्रयोर्वक्षस्थलेनिपततिइतिश्लोकाभिप्रायमवगम्य निःक्रांतः सर्वआलिजनः अत्रापितरुणरात्रौशुकसारि
कादीनांपक्षिणांमधुरस्वरैर्मदनोर्मिसंसूचिता रामः अंकेकृत्वाजनकतनयांद्वारकोटेस्तलांतात्पर्यंकांकेविपुलपुलकांराघवोन
म्रवक्त्राम् बाणान्पंचप्रवदतिजनः पंचबाणोप्रमाणैर्बाणैः किंमांप्रहरतिशनैर्व्याहरंतीजगाम ११

यदुदयेविकासितत्वात् पुनर्नसंकोच-
इतिभावः रतिपतेर्बाणानांनिर्वाणस्तीक्ष्णीकरणंतस्यशाणः उपलविशेषः यद्वा निर्वाणोमोक्षस्तस्यशाणः सहायकृत् कामबाणनिर्मुक्तौसत्यांसहाय्यकृदि
तिभावः निर्वाणस्तीक्ष्णमोक्षयोरितिचरकः उत्तेजकोपलेशाणः पक्षेप्यात्मगतेपुमानितिधरणिः १० अथजानकीराममयोः शृंगारंवर्णयति अंकेकृत्वेति

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हारकोटे: हारागभागस्य तलांतात् जनकतनयां अंके कृत्वा पर्यंकांके पर्यंकमध्ये निनाय आनयत् विपुलपुलकामें तेनमुखस्मितस्निग्धसात्विकोदर्शित:
उक्तंच रसोदधौ साक्षादीश्वरयोगोयैस्तेमुख्यामनीषिभिर्ज्ञेयाः इतिद्रूढिमरतिप्रकारायेस्यु: स्निग्धामतास्तएवात्र इत्यपिशनैर्मनसिउवाच बालायाःप्रभू
तरोमांचदर्शनेन पंचबाणोप्यपरिमितबाणभ्रांतिः ११ गाढंगाढमिति मानकीर्णामामास्पृशेत्यादि व्याजवचनभाषिणी सीता सद्यत्हृदयंच अनिलस्या
गनाय वायोरागमनाय आ ईषत् शिथिलं चकार किं कृत्वा पुंडरीकाक्षोरामस्तद्वक्षः पीठं कमलमुकुलं नत्सदृशकोमलं कुचयोरपिकाठिन्यं मत्वा कीदृशीकामैः

जानकी गाढंगाढंकमलमुकुलंपुंडरीकाक्षवक्षः पीठंकाठिन्यमपिकुचयोर्जानकीमानकीर्णा पूर्णाकामैः शि
थिलमनिलस्यागमायाचकारस्फीतंनीतंसद्यत्हृदयंस्वामिनालिंग्यमत्वा १२

कामसंबंधिभावैः पूर्णाकामलकाविदग्धाइत्यर्थः स्वामिनाश्रीरामेणापि गाढंगाढंयथास्यात्तथा आलिंग्य स्फीतंनीतं स्फीतारव्यंचुंबनंप्रापितं तदुक्तंका-
मावतारे नकारबहुलक्षिसहस्त्रांतंवंचिताधरम् रभसागंडसंस्पर्शे स्फीतंतच्चुंबनंमतमिति कमलकलिकाकोमलं पुंडरीकाक्षवक्षः कुचकाठिन्येनव्यथि
तंमाभूदिति शंकया बाहुपाशमीषत् विसृज्य पवनप्रवेशाय हृदयं शिथिलमाचकारेतिभावः १२ छ छ छ छ



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अन्योन्यमिति तत्र संभोगसमये भूयो भूयो नंदतोर्मुहुर्मुहुर्वर्धमानयोर्यूनोः जानकीरामचंद्रयोः एषसंसारो नवइवजातः अज्ञानरसप्रदो जातइतिभावः
गर्भेसारः सुखं यस्य सः कीदृशयोः परस्परं बाहुपाशग्रहणयोरभसातिरेकस्तमभिव्याप्यशिलितुं शीलं ययोस्तौ तथापुनः कीदृशयोः प्रभूतं बहु अभिम
तंइष्टफलकामफलं भुंजतोः यथेच्छानेकफकलाविदग्धयोरिति पुनरध्याहारः कामिनोः कामरसवर्द्धनविदग्धयोरिति बाहुबंधः च्युतः शिथिलो
जातइति किं रामेणोक्तं माइति मां गाढं आलिंग्य स्वपिहि सीतयोक्तं नाहिनहीति अतएव मधुरालापिनोः स्वपिहि नहि नहीत्यादि माधुर्यं श्यामं काम

जानकीरामचंद्रयोः अन्योन्यं बाहुपाशग्रहणरसभराशीलिनोस्तत्र यूनोर्भूयो भूयः प्रभूताभिमतफलभुजो
र्नंदतोर्जातएषः संसारो गर्भसारो नवइव मधुरालापिनोः कामिनोर्मां गाढं चालिंग्य गाढं स्वपिहि नहि नहीति च्यु
तोबाहुबंधः १२

समाकृतिं राममालिंग्य उत्कंठितापि कामाकुलापि जानकीकुलसंभूतिललज्जया नवसंगमतया च भर्तृमनोहरणा
यच नाहि नहीति व्याहृत्यदुः सहमपि मारज्वरं सहते स्म १३ वक्रेइति चंदनं खदिरं घनः कर्पूरः ताभ्यामारक्तः पूगः क्रमुको गर्भो यस्यास्ताम्
चूर्णकस्तूरिकागर्भं खदिरं चंदनं मनमिनिधरणिः १४ ततः किं जातमित्यपेक्षायामाह मंदं मंदमिति जनकतनया वीटिकां चतुर्धा विधाय तत्रा

GC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पिमंदंमंदंशनैः तत्रापिस्वैरं स्वसुखानुसारंयथातथाजहे ह्रतवतीचतुर्धात्वे हेतुः कुतस्तस्यरामस्ययत् अधरमधुतास्मिन् यत्प्रेमतस्मादेकदैवग्रहणे तदधरायोगः स्यादितिभावः मंदमंदत्वे हेतुः कीदृशीमिलितांक्षीतदधरस्पर्शानंदान्नेत्रमीलनेसति तदूरणायोगान् मंदत्वं तदनुग्रहणानंतरंतस्या वीटिकायाश्चतुरः कवलान् धर्मार्थकाममोक्षान् तत्प्राप्तिसमान् मेने रामोपितस्याः सीतायामधुरं अधरंपीत्वातमेवाधरंब्रह्ममेने ब्रह्मानंदसमंमे

वक्त्रेततः फणिलतादलवीटिकांस्वेविन्यस्यचंदनघनाहृतपूगगर्भाम् रामोब्रवीद्दयिगृहाणमुखेनबालेतच्छद्मना तदधरंमधुरंप्रपातुम् १४ मंदंमंदंजनकतनयातांचतुर्धाविधायस्वैरंजन्हेतदधरमधुप्रेमतोमीलिताक्षी मेनेतस्या स्तदनुकवलान्धर्मकामार्थमोक्षान्रामःकामंमधुरमधुरंब्रह्मपीत्वापितस्याः १५ भातिस्मचित्तास्थितरामचंद्रंसारुं धतीनिर्गमशंकयेव स्तनोपरिस्थापितपाणिपद्मासंजातनिद्रासरसीरुहाक्षी १६

ने एतदधिकब्रह्मसुखंनास्तीतिभावः १५ भातीति छद्मनामिषेणस्वीकृतनिद्राभातिस्मस्तनयोरुपरिस्थापितंपाणिपद्मंययासा उत्प्रेक्षते किंकुर्वतीव चित्तस्थितस्मासौरामचंद्रस्तंनिर्गमशंकयात्हृदयान्मानिर्गच्छत्विति भयेनरुंधतीव १६ ७ ७ ७





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कामाग्निना शुष्यंतयोः रमणीयः रामस्य सीतायाः कुंचांतः स्तनमध्यदेशस्तद्युक्ते तद्दिग्धे मलयजपंकस्तस्मिन्निमग्नोऽलिर्भ्रमरो लक्ष्यते उत्प्रेक्ष्यते कीदृशः गाढं यथास्यात्तथा बद्धा अखिला अंघ्रयो यस्य अत एव उपरि विततौ पक्षौ यस्य उड्डीनासंभवात् क इव लक्ष्यते एष कुसुमेषोः शर इव पुंखमात्रावशिष्टः अन्यत् तद्द यमग्न इति १७ द्राक् ईषद्व्याजेन भावाविष्करणदंभेनाश्रितानिद्रा यया सा अन्यथा वै जात्यमायाति जानकी पतिं प्रमदयति प्रकृष्टं हर्षयति हर्षप्रकारमेवाह

रामः तत्र मैथिलसुतोरस्थलनिक्षिप्तयक्षकर्दमे सानंदपतितभ्रमरमालोक्य मदनदहनशुष्यत्कांतकांताकुचांतर्दिग्धमलयजपं केगाढबद्धाखिलांघ्रिः उपरिविततपक्षोलक्ष्यतेऽलिर्निमग्नः शर इव कुसुमेषोरेषपुंखावशेषः १७ तत्रावसरे पृथुलजघनभा रंमंदमांदोलयंती मृदुचलदलकाग्रा प्रस्फुरत्कर्णपूरा प्रकटितभुजमूलादर्शितस्तन्यलीला प्रमदयति पतिं द्राक् जानकी व्याज निद्रा १८

मंदं यथास्यात्तथा पृथुलं मांसलं जघनं तस्य यो भारः तं दोलयंती तोलयंती पुनः कीदृशी मृदूनि स्पर्शार्हाणि चंचलानि अलकाग्राणि यस्याः प्रकटितं भुजमूलं यया दर्शिता स्तन्यलीला स्तनयोः परिसरशोभा यया एनतस्यैन कुंचितासव्यं शयनं दर्शितं तदुक्तं कामावतारे प्रमीलादंभतो यत्र प्रीतिदा नदिदत्तया स्वशोभादीयते नेत्रे शयनं तद्धि कुंचितम् १८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तदनु व्याजाविष्कृतभावदर्शनानंतरंरामः जनकपुत्रीवक्त्रं आलोक्यपुनः पुनः आघ्रायचुंबन्नपितृप्तोनजातः स्तनतटभुजमूलोरस्थलंरोमराजिमदनसदनंचापिरामेणचुंबितं आसीदिति अत्र द्वंद्वैक्यं कीदृशः पंचबाणः कामोस्यास्तीतितथा सकामइति अर्शादिभ्योच् एतेन पंचशराख्यंचुंबनंद्योतितम् तदुक्तंवात्स्यायनीये भुजमूलौस्तनौवक्षोवलिंमदनसद्मच पद्मिनीचुंबितादद्यावंयातिपंचशराभिधं १९ अथाभयलोलालिंगनंद्योतयितुंपद्यमवतारयति-

तामपिदूरस्थांमन्वानः तदनुजनकपुत्रीवक्त्रमालोक्यरामः पुनरपिपुनरेवाघ्रायचुंबन्नतृप्तः स्तनतटभुजमूलोरस्थलंरोमराजीमदनसदनमासीच्चुंबितंपंचबाणः १९ श्रीरामपादाः निद्रालुस्त्रीनितंबांबरहरणरणन्मेखलारावधावत्कंदर्पारब्धबाणव्यतिकरतरलाः कामिनोयामिनीषु ताटंकोपांतकांतग्रथितमणिगणोगच्छदच्छप्रभाभिर्व्यक्तांगास्तुंगकंपा जघनगिरिदरीमाश्रयंतेश्रयंते २०

निद्रेति तेप्रसिद्धाः सकामाः श्रीरामपादाः घनमेवगिरिदरीसैवाश्रयं निलयनस्थानं श्रयंते इति कुतइत्यपेक्षायामाह निद्राजातायस्याः एवंभूतास्त्रीसीतातस्यानितंबवस्त्राकर्षणेसतिरणंतीशब्दितायामेखलातस्याः रवेण धावन् योकंदर्पः तेनारब्धः संधितोयोबाणस्तेनयोव्यतिकरोभयंतेनतरलाः आत्मानंगोपायितुंचंचलाअन्योपिचौर्यंकुर्वन् केनापिज्ञातोअलंपलायितुंआत्मानंगोपायतितथैतेपिकामचौर्यंअन्यस्मिन् अन्यावभासोव्यतिकरः अत्रनिर्भयत्वेनभयंतर्हिनिलीयंतिष्ठंतु इतिचेत्तत्राह ताटंकयोरुपांतेषुग्रथिताः येमणिगणारत्नसमूहास्ते-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भ्यउद्गच्छंतोयाः उज्वलाः प्रभादीप्तयस्ताभिर्व्यक्तांगाः प्रकटीकृतशरीराः अतएवज्ञातेषुसत्सुतुंगः कंपोयेषांतेएवंभूताः संतः आश्रयंते उक्तंचकामावता
रे निर्निद्रितामृगदृशोरसनांयदेव संमोचनायविभयीकृतमानसोलं तद्भावकंपमुखतोजघनेनिलीयमास्थायतिष्ठतितदाभयलोलमुक्तमिति २० स्पृहे
ति भावंमानसंरागंअन्यत् स्पष्टमेव प्रेमतः संगंस्पृहयति बालभावाद्बिभेतिइतियोज्यम् २१ अत्यंतंकामबाणभिन्नासतीवीतलज्जाजानकी निधुवने
ति हेरमणस्यमुखानुसारंनिर्विशंकंयथास्यात्तथामेरसनांपिबपिब आदरेवीप्सा अत्रास्वादनमेवपानं ननुरमित्वायास्यामीतिचेत्तत्राह प्रियायाः-

जानकीप्रबुद्धा स्पृहयतिचबिभेतिप्रेमतोबालभावान्मिलतिसुरतसंगेप्यंगमाकुंचयंती अहहनहिनहीतिव्याजमप्या
लपंतीस्मितमधुरकटाक्षैर्भावमाविष्करोति २१ निधुवनघनकेलिग्लानिभावंभजंत्यारमणरभसशंकातंकिचेतःप्रियायाः अ
धरदशनसपर्प्यत्सीत्कृतायाधृतायाः पिबपिबरसनांमेकामतोनिर्विशंकम् २२

ममचेतः रभसशंकातंकि रभसोरताधिक्यंततोयाशंकाभयंतेनातंकः कंपोयस्मिन्तत् एवंभूतंजातंरमणायाक्षमास्मीतिभावः यद्वा सर्वमेकंपदं रमण-
स्यतवयोरभसोरताधिक्यंतस्माद्याशंकातयायः आतंकस्तद्युक्तंचेतः तदेवप्रियंयस्याः मेकुतोनक्षमसीत्यपेक्षायामाह निधुवनेरतौघनायाबद्धाकेलिस्तया
द्रावणादिनाग्लानिभावंनिःप्राणतांभजंत्याः उक्तंचरसोदधौ अंतश्चंद्रं देहेयत्र बलंपुष्टिकृद्द्रवेदस्याः तद्विगमाइत्याधिक्यश्रमनिःप्राणताग्लानिः पुनःकी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दृश्याः अधरस्यदंशनंखंडनंतेनसर्पत्निर्गच्छत् सीत्कृतंसीत्काररवोयस्याः यद्वा अधरदशनयोः अधरदंतयोरेवसर्पत् सीत्कृतंयस्याः उक्तंचपंचसायके
द्रवतिचयदिनारीप्रौढरागाग्निमुक्तामृदुनिधुवनयोगेदंतसंधौगभीरं द्रवतिरदनवासःकिंचिदुन्मथ्यभूयः कथितमिहमुनींद्रैःसीत्कृतंरागकारि अस्मिन्पद्ये
सीत्कृतमाविष्कृतंपुनःधृतायाः अंकेवश्यंप्रेष्ठेयंनायिका तदुक्तंरसोदधौ सीत्कृतसंज्ञाभिमुखोयस्याः सततंप्रियोभवेदनुगः वश्यप्रेष्ठासोक्ताब्रज
रमणीमंडनंयथाराधेति २२ वाचामिति रामराज्ञीचरस्थावरांस्थास्नुचरिष्णुरूपांधरित्रींसुरभयतिसुरभीकरोति केनवाचांगुंफेनरचनयासंद

रामः सानंदं जानकीवाग्विलाससमुल्लासयतिलालित्यशालिनालापेन पद्यं वाचांगुंफेनरंभाकरकमलदलोदारसंचाररंचं
तंत्रीसंजातमंजुस्वरसरसतरोद्गारताराक्षरेण प्रत्यग्रोन्निद्रनाकद्रुमकुसुमनवामोदसंवादमैत्रीपात्रीभूतेनधात्रींसुरभयतिचर
स्थावरांरामराज्ञी २३ गौरचनागुंफइत्यमरः कीदृशेनगुंफेनरंभायाः अप्सरसस्तस्याः करावेवकमलेतयोर्यानिदलान्यंगुलयः तासांयः उदारः संप्रमाद-
वान् संचारस्तद्रागव्यंजकंतंत्रीगमनंतेनचंचतीसशब्दायातंत्रीवीणाततः संजातोयोमंजुस्वरः कोमलालापः ततोपिसरसतरोऽतिशयेनरसवान् यः उद्गारःउ
द्गारख्यंगतितस्मिन् ताराणिव्यक्ताक्षराणियस्मिन्तत् तदुक्तंसंगीते सात्वतीपंचमश्रीकप्रीतिमंठविराजितं त्रिपदंसध्रुवंगीतमुद्गाराख्यंमतंबुधैरिति पुनःप्र
त्यग्रंनवीनंउन्निद्रंविकसितंचतन्नाकद्रुमकुसुमंपारिजातपुष्पंतस्ययोनवामोदस्तात्कालिकोगंधः सएवयासंवादमैत्रीवचनचातुरीतस्याः पात्रीभूतेनपारिजातकु
सुमादप्यतिसुगंधेनेत्यर्थः २३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अरण्येमिति सारंगैर्मृगैर्हरिभिः सिंहैः मातंगैः गजैः पंकजवनैः पद्मव्रातैः वनंजलंजीवनंभुवनंवनमित्यमरः कीदृशैः सर्वैः प्रियायास्तवचक्षुः सौंदर्येण मृगाः मध्य
प्रदेशसौंदर्येणगजकुंभौवदनसौंदर्येणकमलवनंविजितमितिमृगादिभिररण्यादिश्रयणंयुक्तमित्याह सतांसंभावितानांमानेचित्तोन्नतौम्लानेसतिकेनापिदूषितेस-
तिमरणंमुख्यंतदभावेदूरसरणंदेशांतरदुर्गाश्रयणंयोग्यंअत एभिर्दुर्गमेवाश्रितमितिभावः अयिप्रिये अयीतिकोमलामंत्रणे अपिवातत्रसंभावनागर्हासमुच्चय प्रश्नशं
कासंभावनास्वपीत्यमरः २४ वक्रमिति सरसीरुहाणिपद्मानिएणीदृशस्तेवक्रंविलोक्यतत्सौंदर्यार्थंवनांतेजलमध्येजपायइष्टाराधनायभृंगश्रेण्येवाक्षमा

अथरामस्तामाल्हादयति अरण्यंसारंगैर्गिरिकुहरगर्भाश्चहरिभिर्दिशोदिङ्मातंगैःश्रितमपिवनंपंकजवनैः प्रि
याचक्षुर्मध्यस्तनवदनसौंदर्यविजितैःसतांमानेम्लानेमरणमथवादूरसरणम् २४ वक्रंवनांतेसरसीरुहाणिभृं
गाक्षमालांजगृहुर्जपाय एणीदृशस्तेप्यवलोक्यवेणीमंगंभुजंगाधिपतिर्जुगोप २५

लातांजगृहुः एणीदृशइतिपदेनमृग्योपिवनांते अरण्येमध्येतृणादिभक्षणादिना नेत्रशोभाप्राप्त्यर्थंतपस्यंतीत्यर्थः भुजंगाधिपतिरपितेवेणीमव-
लोक्यतत्सादृश्यहीनमंगंजुगोप अन्यथास्वशरीरगोपनेनकोलाभइति यद्वा एणीदृशः पदद्वयंएणीमृगीजात्येकवचनंतेदृशः दृष्टीरवलोकनवैदग्ध्या
नेकत्वा द्वहुवचनं अवलोक्यवनांते अरण्यंदुर्गेनेत्ररूपंअंगंजुगोपतन्नेत्रसादृश्यभाववैलक्षण्यत्वात् २५ ७ ७ ७ ७ ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्वर्णमिति स्रुष्टुवर्णो यस्य एवं भूतमपि स्वर्णस्रुवर्णं तव कांतिं विलोक्य आत्मगतमलाकर्षणाय त्वदंगस्य साम्यत्वकथनाय च स्वदेहं दहने चिक्षेप ननु तद्वर्णं प्राप्त
वदिति भावः हिरकमणितुल्य बीजपूर्णमपि दाडिमस्य फलं तव दंतपंक्तिं विलोक्य तूर्णमेव विदीर्णं स्फुटितं तदुपमानबहिः कृतत्वादिति भावः २६ वदनमिति
हे कांते प्रिये पश्य मुखगौरवं प्रत्यक्षमवलोक्य विधाता ऊर्व्यां भूमौ स्थितं तव वदनं वाद्धौ क्षीरसमुद्रे क्षितसीतरश्मिं गुणसाम्यातिरेकज्ञापनाय अनिलएव तु-

स्वर्णस्रुवर्णं दहनेस्वदेहं चिक्षेप कांतिं तव दंतपंक्तिम् विलोक्य पूर्णं मणिबीजपूर्णं फलं विदीर्णं ननु दाडिमस्य २६
वदनममृतरश्मिं पश्य कांते तवोर्व्यामनिलतुलनदंडेनास्यवाद्धौ विधाता स्थितमतुलयदिंदुः खेचरोभूल्लघुत्वा
न्क्षिपति च परिपूर्त्यै तस्य ताराः किमेताः २७ जानकी सानंदं सोत्कंठा च प्राणवल्लभमल्हादयति रमणचरणयु
ग्मं तावकं भावयित्वा मधुरगिरमुदारं रामदासी ब्रवीमि

लादंडस्तेनातुलयत् तोलयामास तदेंदुः लघुत्वात् अल्पगुणाश्रितत्वात् खच
र उन्नतोभूत् तदास्य चंद्रस्य पूर्त्यै यास्ताराः अश्विन्याद्याः क्षिपति स्म तस्य चंद्रस्य पूर्त्यै एतास्ताराः किं कियंत्यः न कियंत्यः इत्यर्थः गुणगौरवात्तव वदनमत्रैव
स्थितं चंद्रस्तु गुणाभावादूर्ध्वं गत इति भावः २७ ननु सितारवंडश्चेदल्पतरः गुडो बहुतरः तर्हि किं गौरवादेव गुणाधिक्यमित्यपेक्षायामाह रमणेति भाव



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यित्वानिषेव्य धात्रागुरुकृतमपिमेवदनं तथापिप्रियेणतयाआस्वाद्य अंमृतरश्मेरपिमंडलंवानिर्णीयतांयत्रैवस्वादातिशयस्तत्रैवगौरवमितिभावः २८
सीतामिति मनोहरतरांगिरमुद्गिरंतीसीतांपरिपूर्णकामः कामकलाविलासोयत्र अन्यथेश्वरत्वस्यक्षतिःस्यात् रामःसीतांतथाबुभुजे यथाकोपीश्व
रोभूत्वा नाद्यभुनक्तिनपुराबुभुजे नाग्रेभोक्ष्यतीति २९ अथैतद्वर्णनमुपसंहरति मृद्वीति प्रियायाःकापिअनिर्वचनीयादिव्या अलौकिकीरत्नश्री-
राघवस्यत्द्हृदयतापंत्द्हृत् अयतीतित्द्हृदयः कामस्तस्यतापंव्यथांहरतीतिकीदृशीमृदुःस्पर्शासहः सुरभिः सुगंधः सुवर्णोगौरोज्वलः स्फीतः किंचिदुन्नतः

कृतमपिगुरुधात्रास्वाद्यनिर्णीयतांमेवदनममृतरश्मेर्मंडलंवाप्रियेण २८ रामःसानंदम् सीतांमनोहरतरांगि
रिमुद्गिरंतीमालिंग्यतत्रबुभुजेपरिपूर्णकामः रामस्तथात्रिभुवनेपियथानकोपिरामांभुनक्तिबुभुजेनचभोक्ष्यती
शः २९ मृदुसुरभिसुवर्णस्फीतकक्षापुटोद्यद्दलितभुजलतायाःसंपुटालिंगितायाः

सचासौकक्षापुटश्चतस्मादुद्यतेललि-
तेभुजलतेयस्याःसातथाकक्षापुटोद्यदितिपाठेसएवार्थः एवंभूतात्कक्षापुटादुद्यतेउपरिभुजमूलेयस्याः हरत्विइतिपाठः तत्राशीः किंपुनः कीदृश्याः संपुटा
लिंगितायाः संपुटाख्यालिंगनेनालिंगितायाः उक्तंपंचसायके उर्ध्वगते मध्यगतेयुवत्याः पार्श्वस्थितायाः परिरभ्यदेहं यूनःस्त्रियोर्लोलनतोरतज्ञैरत्यद्भु
वः संपुटनामधेयः अयमेवोदयोतेनान्यथोक्तः उत्तानसुतप्रमदोपरिस्थः कक्ष्यांसमावर्ज्यतदूरुयुग्मं संमर्दयानस्तनमंडलंयद्रमेतसः स्यात्किल

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संपुटाख्यः ३० आगामीति रंगभवनेस्मरतागारेचिरंकोपिभ्रमः आविरासीत्कयोः तयोः सीतारामयोः भ्रमोपिचिरमव्ययमितिचरकः किंकृत्वैव आगामिः
भविष्योयोदीर्घविरहः दंडकारण्यप्रस्थानरूपस्तज्ज्ञात्वैव कीदृशीसीताअद्भुताःकामकेलयोयस्याःसा अस्यरसस्यादौतुरंगांस्ताडयामासेतिभ्रमःउक्तःप्रां
तेबिडालपत्नीपूजनमेवभ्रमः अतःआद्यांतभ्रमादिनिष्टमेवजातं यद्वास्पष्टमेवार्थः रंगभवनेअद्भुतकामकेलिः कामक्रीडाचिरमाविरासीत् अन्यत्पूर्व
वत् अन्यत्कविनैवव्याख्यातंभ्रममेवाविः करोतिचरणायुधानामितितयाः जानकीरामचंद्रयोर्मध्येजानकीचरणायुधानांगिरंश्रुत्वा बिडालपत्नींअपू

स्मरतरसवशायाराघवस्यप्रियायाहरतित्हृदयतापंकापिदिव्यास्तनश्रीः ३० आगामिदीर्घविरहश्चिरमाविरासीत्
ज्ञात्वैवरंगभवनेद्भुतकामकेलिः श्रुत्वातयोर्गिरमपूजयदोतुपत्नीमुद्गीर्णकर्णसरणांचरणायुधानात् ३१ इतिश्रीहनु
मन्नाटकेद्वितीयोंकः २

जयत् अत्रबिडालपत्नीशब्दाद्विडालपूजनेपतिव्रतायाः परपुरुषस्पर्शोमाभूदितिसूचितम् किमित्यपूजयत् एवमु
क्तंभवति बालायाश्वेतसीचरणायुधशब्देनैवग्रामरुत्पद्यतेनेतरथा अतः पूजिताबिडालपत्नी पूर्ववैरमनुस्मरंतीचरणायुधमव्यग्रमश्नातु तस्मिन्निवृत्ते प्रातःका
लासंभवादनंताभवतु यामिनीकामिनीपतिमालिंग्याजस्रंस्मरवमनुभवत्वित्यभिप्रेतोर्थः ३१ इतिश्रीमिश्रदासविरचितायां हनुमन्नाटकदीपिकायांजा
नकीविलासोनामद्वितीयोंकः २



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अथरामवनलीलांवर्णयितुमंकमारभते भुक्तेतिराघवोरामः धर्मपत्न्यासार्द्धं कतिपयसमयंयथास्यात्तथास्फुरंगान् भोगान् कामविलासानष्टौभोगान् भु-
क्त्वाश्रवणमुनिपितुर्यज्ञदत्ताख्यवैश्यतपस्विनः शापसमयंप्राप अत्रेयंकथा मृगयांगतोदशरथः वनगजभ्रमेण शब्दवेधित्वपरिचयाय कुंभं जलेन पूरयंतं
श्रवणमुनिंअद्दष्ट्वैवजघान ततोस्यपित्रायज्ञदत्तेनशप्तः अस्यामेवावस्थायांपुत्रशोकात्परलोकंगमिष्यसीतितं वियोगसमयंप्रापयद्वा राघवोएषः दश
रथः धर्मपत्न्यासार्द्धं वर्द्धिष्णुकामः अपूर्णकामाभिलाष इतिउभयोर्विशेषणम् भोगानष्टौउक्तंच स्रुगंधिवनितावस्त्रंगीतंतांबूलभोजनम् वाहनंभू

भुक्त्वाभोगान्स्फुरंगान्कतिपयसमयंराघवोधर्मपत्न्यासार्द्धंवर्द्धिष्णुकामःश्रवणमुनिपितुःप्रापहाशापकालम्
धत्तेतस्मिन्विवस्वान्मलिनकिरणतांहामहोत्पातहेतोरुल्कादंडःप्रचंडःप्रपततिनभसःकंपतेभूतधात्री १

षणंचेति भोगाष्टकमुदीरितम् शापकालमेव द्योतयति तस्मिन्समयेधत्तेव्यधत्त भूतार्थेवर्तमानता नाटकालंकृतित्वात् उक्तंच दशरूपके प्रकृतं
वर्तमानत्वं नाटकालंकृतिःपरा १ दिगिति अहनिदिवैवस्फारोविस्तारः स्वर्भानोः राहोः सकाशात् मध्यान्हेऊर्ध्वमास्यकोशोयेषांते श्वगणाः सा
रमेयगणाः तेषांरुतमभूत् स्फीतोबहुतरः फेरूणांशिवानांप्रचारः इतस्ततः सरणंवारंवारमभूत् कइवगम्भीरप्रलयइव कीदृशः महाकालोरुद्र
स्तस्यचीत्कारेणघोरः प्रलयेरुद्रश्चीत्कारंकरोतिइति प्रसिद्धंस्फीतकेतुप्रचार इतिवापाठेस्पष्टार्थः एकोत्तरशतंकेतवःसंति २ तानितिद-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शस्यंदनं दशरथं क्रंदयंती शोषयंती शिवशिवेतिखेदे एषः रामः शांत्यै उत्पातजन्य दोषोपशमाय वनमभिप्रेष्यतां पुत्रस्य मम सुतस्य भरतस्य राज्यं भवतु इति वाचमूचे ३ राममिति अथवा प्राणधारणाक्षमश्चेत्तान्प्राणानपि विहाय अनृतप्रतिनिर्मुक्तः स्यां तदेव वचनं अन्यथा माभूत्



दिग्भागो धूसरोऽभूद्दहनिबहुतरस्फारतारा: स्फुरंति स्वर्भानोर्भानवीयं ग्रहणमसमये रोधिरी बिंदुवृष्टिः मध्यान्हो र्ध्वास्यकोशश्शिवगणरुतमति स्फीतिफेरुप्रचारो वारंवारं गभीर प्रलय इव महाकालचित्कारघोरः २ कैकेयी आत्मगतम् प्रातःकिलमहाग्बंधकालस्तर्हि द्रुतं राजानं भरतराज्यं प्रार्थयामि नखलु कालक्षेपः श्रेयसे रहसि उपगम्य प्रकाशं राज न्नमंगलीरियं वधूर्यतोऽस्या आगमनमात्रेण महोत्पाताः संभवंतीति तानुत्पातानवेक्ष्याक्षितिपमथ दशास्यंदनं क्रंदयंती लोकान् शोकानलौघैः शिवाशिवतरसा भस्मसात्कुर्वतीव कैकेयी वाचमूचे निखिलनिजकुलांगारमूर्तिः ससीतः शांत्यै पुत्रस्य राज्यं भवतु वनमभिप्रेष्यतामेष रामः ३

तदनु इति विचारानंतरं हा कष्टं तथेति यथा त्वं वदसि तथैवास्तु इति तां कैकेयीं बभाषे अत्र राज्ञो ऽतिचिंतितं चेत्कैकेय्युक्तं करोमि तर्हि रामादर्शनेन मरणमाप्नुयां न चेदनृतं स्यात्तर्ह्यनृतं मास्यात् मरणमेवास्तु इति भावः अत्रेयं कथा देवासुरयुद्धे देवपक्षे स्थितो राजा मूर्छितः तेनैव सह



CC-0. In Public Domain Kavikulguru Kalidas Sanskrit University Ramtek Collection

यं तत्रगताकेकेयीरात्रावेनं भक्षयद्भ्योराक्षसेभ्योयोगबलेनारक्षत् तदाप्रबुद्धेनराज्ञावरद्वयमस्यैदत्तंतत्तयाराज्ञिविन्यस्तंयथेच्छंगृहीष्यामी-
तितद्वरादानादनृतःस्यामीतिप्रसिद्धम् ४ रामभरतावितिअत्रप्रसिद्धशब्दार्थकथनेरामायणविरोधःस्यात् अस्याप्यग्रिमश्लोकेऽभ्यतत एवं

गद्यम् दशरथःसकरुणंस्त्रीवचनस्वीकरणंमरणोत्साहंचनाटयन्महतींमूर्च्छामासाद्यधरणीतलमुपगतः कथमपि
चेतनामुपलभ्य रामंकामाग्रजमिववनंप्रास्थितंवीक्ष्यशक्तोधर्तुंप्राणाच्छिवशिवकथंतान्विहायाथवाहम् निर्मुक्तः
स्यांवचनमनृतंतत्तुननान्यथामेभूयाद्भूयस्त्वदनुवचनंहाबभाषेतथेति ४ गद्यम् रामभरतौस्वंस्वंकालमधिग
म्यहर्षशोकौनाटयंतौगुरोर्गिराजटावल्कल छत्रचामरधारिणौवनप्रस्थानराज्याभिषेकारंभायराजानंदशरथंन
मस्कर्तुमवतरतः तत्रभरतः हाताततमातरहहज्वलितानलोमांकामंदहत्वशनिशैलकृपाणबाणाः मथ्नंतुतान्वि
षहतेभरतःसलिलंहारामचंद्रपदयोर्नपुनर्वियोगम् ५

व्याख्यायते अत्रराज्ञोक्तंराज्यात्रष्टोरामोवनंयातु अ
राज्यार्होभरतोराज्यंगृण्हातु तदाभरतोपिराज्यंपरित्यज्यरामानुगमनायोद्यतोभूदितिपठ्यते अन्यथाभरताधर्मःस्यात्रामभरतौराजानंन-
मस्कर्तुमवतरतइत्यन्वयः कीदृशौस्वंस्वंसमयंवनगमनंराज्यग्रहणरूपमधिगम्यहर्षशोकौवनगमनात् रामोहर्षंराज्यश्रवणात् भरतःशोकं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नाटयंतो नाटकमेवाह गुरोर्दशरथस्यगिराजटाश्चवल्कलानिचतान्येवछत्रचामराणिचतद्धारिणौकस्मैवनप्रस्थानमेवराज्याभिषेकः तस्मैएतदर्थेन
नृपेसत्यत्वमायातिभरतेपिधार्मिकत्वंनृपेणरामेभरतेपिराज्यंप्रतिज्ञातं एकतरादानेनृतमेवतस्मादुभाभ्यांवनमेवराज्यंमतंभरतोजटाधरः सन्रामा
ज्ञयाराज्यंचकारेतिकैकेय्यापिवरदानात्सत्यत्वमेव तत्रभरतः अशनिर्वज्रंशैलाः गिरयः कृपाणः खड्गः बाणः शरः तेचतेतानिवज्रादीनितिस॰

मांबाधतेनहितथागहनेषुवासोराज्यारुचिर्जनकबांधववत्सलस्य रामानुजस्यभरतस्ययथाप्रियायाः पादा
रविंदगमनक्षतिरुत्पलाक्ष्याः ६ श्रुत्वास्रुमंत्रवचनेनरुतप्रयाणेशापस्यतस्यचविचिंत्यविपाकवेलाम्
हाराघवेतिसकृदुच्चरितंनृपेणनिश्वस्यदीर्घतरमुच्छ्वसितंनभूयः ७

गमम् ५ भरतस्यराज्यारुचिश्चराज्याकरणंकीदृशस्यभरतस्यजनकेदशरथेबांधवेमयिवत्सलस्यप्रेमवतः यद्वा जनकोविदेहस्तद्बांधवस्य-
तद्भ्रातुः प्रेष्ठस्यजामातृत्वात् ममानुजस्येति अन्यत्सुगमम् ६ श्रुत्वेति नृपेणदशरथेनस्रुमंत्रोमंत्रीतद्वचनेनसुतानांरामलक्ष्मणभरता-
दीनांहाराघवरामरामइति एकवारमुच्चरितेसतिदीर्घतरंनिश्वस्यभूयोनोच्छ्वासितंदेहंत्यक्तमितिभावः ७ ५ ५ ५ ५



CC-0. In Public Domain Kavikulguru Kalidas Sanskrit University Ramtek Collection

भरतः महती मूर्छामासाद्य वैकल्यं नाटयति मातरिति उक्तिप्रत्युक्त्यार्थोद्घाटनं अन्यत् स्फुटमम् इति पुनः मूर्च्छितो भुवि पपात ८ गुरोरिति शरयुक्तश्चा पो हस्ते यस्य मध्यमपदलोपी समासः अन्यार्थे ऽथशब्दः सकः लक्ष्मणस्तं राघवं अनुजगाम बालवत्सो गामिवेति ९ गुर्वाज्ञेति गुरोर्दशरथस्य

मातस्तातः क्व यातः स्फुरपतिभवनं हा कुतः पुत्रशोकात् कोसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य प्राप्तो सौ काननांतं किमिति नृपगिरा किं तया सो बभाषे मद्वाबद्धः फलं ते किमिह तव धराधीशता हा हतोऽस्मि ८ गुरोर्गि राराज्यमपास्य तूर्णं वनं जगामाथ रघुप्रवीरः निषंगपृष्ठः शरचापहस्तस्तं लक्ष्मणो गामिव बालवत्सः ९ गुर्वाज्ञा परिपालनाय च वनं संप्रस्थितं राघवं दृष्ट्वा सोत्वरिता विदेहतनया श्वश्रूजनं पृच्छति नत्वा कोशलकन्यकांघ्रियुगुलं प श्चात्सुमित्रां पुनर्दृष्ट्वा हा शुकसारिका पिककुलं रामानुगा प्रस्थिता १०

अहमपि यास्यामीति पृच्छति कोशलकन्या कौशल्या तदंघ्रियुगुलम् शुकं च सारिकां च पिककुलं च दृष्ट्वेत्यम् १० राम इति अयोध्यानिकट एव नंदि ग्रामोस्ति तत्रस्थः सन्ननुजटाजिनादिवतः किमयोध्यापालने नेति तत्राह रघुपतेः रामस्य वनवासानंतरभोगाय अपालने रामवचनभंगात् त्वमत्रस्थो

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

राज्यं कुर्विति रामवचनं ११ सद्य इति त्रिचतुरेति निपातः असकृद्वारंवार पर्यंतभूः परिसर इत्यमरः १२ आदाविति हे वैदेहि इमान् वनसंबंधिनो भूभागान् भूप्रदेशान् त्वं कथं यायाः कथं गमिष्यसि स्रोतांसि च काननानि च गर्त्ताश्च निर्झराश्च सरितश्च एषां प्रायो बाहुल्यं येषु तान् अपूर्वान् त्वया क-



रामे प्राप्ते वनांतं कथमपि भरतश्चेतनां प्राप्य तातं नीत्वा देवेंद्रलोकं मुनिजनवचनाद्दूर्ध्वदेहक्रियाभिः भ्रातुः शोकाज्ज
टावान् अजिनवृततनुः पालयामास नंदिग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगाय वीरः ११ सद्यः पुरीपरिसरेषु
शिरीषमृद्वी गत्वा जवात्त्रिचतुराणि पदानि सीता गंतव्यमस्ति कियदित्यसकृद्ब्रुवाणा रामाश्रुणा कृतवती प्रथमाव
तारम् १२ रामः आदावेव कृशोदरी कुचतटीभारेण नम्रा पुनर्लीलाचंक्रमणं च नैव सहसे दोलाविधौ श्राम्यसि
स्रोतःकाननगर्त्तनिर्झरसरित्प्रायानपूर्वानिमान् भूभागानपि भूतभैरवनिगान्वैदेहि यायाः कथम् १३

दाप्य दृष्टान् यास्यामीति चेत्तत्राह लीलायै यन्मंदिरेपि चंक्रमणं तदपि त्वं न सहसे दोलाविधौ अपि श्राम्यसि श्रममेषि अत्र हेतुमाह आदाविति १३ रा-
मः चारितामपि कृतप्रयाणां सीतां दृष्ट्वा धरणीं प्रार्थयते अरुणेति भो अवनि भूमे इयं सीता अकस्मात् मंदं मदं यथास्यात्तथा कठिना तनुर्यस्या एवंभूताया



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धरण्याः सकाशात् स्खलंतीसतीयातिकुत इत्यपेक्षायामाह अरुण दलाचेयंनलिनीचतद्वत् आसमंतात् स्निग्धेपादारविंदेयस्याः साअतोस्याः पदवि
न्यासदेशेनिजकठिनत्वंत्यजकस्मात्त्यज्यामीतिचेत्तत्राह तवसुताएतेनवात्सल्यत्वंउदीरितंम् जानकीवनंयाति यद्वाकीदृश्याधरण्याः अरुण दलनलिन्या अरुणा
येदलाः पादांगुलयस्तेषांनलिनीदुःखदेत्यर्थः नलोस्त्रीनालदुःखयोरितिचरकः नलंदुःखमस्या अस्तीतिनलिनी मैथिली १४ पथिकवधूभिः पांथस्त्रीभिः पथी

अरुणदलनलिन्यास्निग्धपादारविंदा कठिनतनुधरण्यायात्यकस्मात्स्खलंती अवनितवसुतेयंपादविन्यासदेशेत्यजनिज
कठिनत्वंजानकीयात्यरण्यम् १४ पथिपथिकवधूभिः सादरंपृच्छमानाकुवलदलनीलः कोयमार्यतवेति स्मितविकसितगंडंव्री
डविभ्रांतनेत्रंमुखमवनमयंतीस्पष्टमाचष्टसीता १५ घुसृणमसृणपादागम्यतेभूः सदर्भाविरचयशिवजातंमूर्ध्निधर्मः कठोरः
इतिहजनकपुत्रीलोचनैरश्रुगर्भैः पथिपथिकवधूभिर्वीक्षिताशिक्षिताच १६ तिपथिमार्गेमार्गेकपथिकवधूभिः ग्रामीणस्त्रीभिः कोस्त्रीग्रा
म्यप्रकाशयोरितिधनंजयः स्मितेनविकसितौगंडौयस्मिन् व्रीडयाविभ्रांतेनेत्रेयस्मिन् तन्मुखमवनमयंती एतेनस्पष्टंमद्रमणोयमित्युक्तवतीनतुगिरेति १५
घुसृणेति पथिमार्गेपथिकवधूभिः अश्रुगर्भैर्लोचनैः कृत्वाजानकीवीक्षिता इतिशिक्षिताच इतिकिंभोसीतेत्वंघुसृणमसृणपादाकमलकोशनवनीततुल्या
रुणकोमलचरणासि भूः सदर्भादर्भांकुरसहिता भवत्यागम्यते मूर्ध्निधर्मः कठोरः अंतः शिवजातंशिरः पादत्राणंवल्कलजंपत्रजंवाविरचय १६ ५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मूर्ध्नीति पयः प्रस्रवैः निर्झररूपैः एषः शैलेंद्रोश्चित्रकूटोपि साश्रुरभूत् केनयेनरुदितेनकीदृशः शैलेंद्रः उद्विग्नाः येविहंगाः पक्षिणः तैः निर्गतापरित्यक्तास्तर वोयस्मिन् निःसंमदाः हर्षरहिताः श्वापदाः मृगादयोयस्मिन् सः प्रमोदामोदसंमदा इत्यमरः १७ तत्रैवसुमित्रालक्ष्मणंप्रति राममिति यथासुखमितिरा मस्ययथासुखंस्यात्तथैवगच्छानुसरेत्यर्थः १८ पदेति अथभरतेनिवृत्तेरामेप्यन्यतः कृतप्रयाणेआहस्म जानकीरामंप्रति विशीर्णासर्वतः प्रक्षिप्ताग्रावा

तत्रचित्रकूटेजानकीसकरुणंसबाष्पम् मूर्ध्नाबद्धजटेनवल्कलभृता देहेनपादानतिंकुर्वाणेभरतेतथाप्ररुदितंतारस्वरैःसी तया येनोद्विग्नविहंगनिर्गततरुर्निःसंमदश्वापदः शैलेंद्रोपिकिलैषभूरिभिरभूत्साश्रुःपयःप्रस्रवैः १७ रामंदशरथंवि द्धिमांविद्धिजनकात्मजाम् अयोध्यामटवींविद्धिगच्छपुत्रयथासुखम् १८ पदकमलरजोभिर्मुक्तपाषाणदेहामलभत यदहल्यांगौतमोधर्मपत्नीम् त्वयिचरतिविशीर्णग्राववविंध्याद्रिपादेकतिकतिभवितारस्तापसादारवंतः १९

णायस्मिन् सचासौविंध्याद्रिपादश्चतस्मिन्त्वयिचरतिसतिकतिकतितापसादारवंतः भवितारइति एतत्कुतइत्यपेक्षायामाह यतःगौतमः शापा च्छिलारूपांअहल्यांतवपदकमलरजोभिर्मुक्तःत्यक्तः पाषाणदेहोययातामलभतइत्युक्तंभवति त्वच्चरणस्पर्शेनयथापूर्वमहल्यापाषाणरूपापिदेवी- त्वंगतातथाद्यापिविंध्यग्रावाणः स्त्रियोभविष्यंतीतिपूर्ववृत्तमनुस्मृत्योक्तम् १९ ५ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वैदेहीति वैदेही अदृष्टराजमंदिरा द्बहिर्व्यवहारतया बालभावाच्च दैवयोगात् नौकास्रवमनुभूयवने चरंतीस्थलेपि भाराक्रांतासतिनौःप्र चरतीति मन्यमानास्मा
भिरतः परमनयैवस्रवभयाणं कर्त्तव्यंनतुपद्ध्यामिति बुद्ध्यारामम धिकृत्याब्रवीत् वनेजलेस्थलेभूमौउपलेतियदीत्यर्थेवाशब्दः इयमपिपोतपुत्रीनौकाचेत् के-
नापिशापिता कापिसुनिपत्नीस्यात् तर्हिनोस्माकमेव श्रीमतीभवतुस्रवकारिणीस्यात्सुनिपत्नीमाभूदितिभावः केवगौतमस्यशापात्उपलतनुः पाषाणदे
हापितेचरणनलिनसंगानुग्रहंभजंतीसती अहल्येवयथाशिलात्वंहित्वा अहल्यात्वंयातानथेयंनौकापिमुनिस्त्री त्वमायातु अस्मदारोहणस्रवाभावात् इ

उपलतनुरहल्यागौतमस्येवशापादियमुपमुनिपत्नीशापिता कापिवास्यात् चरणनलिनसंगानुग्रहंतेभजंतिभवतुचिर
मियंनःश्रीमतीपोतपुत्री २० दृष्ट्वातिदैन्यंजनकात्मजायास्तत्रैवरामः सहलक्ष्मणेन गोदावरीतीरसमाश्रितेषु वनेषुच
क्रेनिजपर्णशालाम् २१

त्युक्तवत्यांसीतायां २० दृष्ट्वेति वनेषुदंडकसंज्ञकेषु २१ लक्ष्मणस्तत्रैवस्तत्कुटीरमणीयतामालोक्य
एषेति हेरघुत्तम एषापंचवटीकुटीभवत्विति शेषः कीदृशीपंचवटी पंचवटयुक्ता एतेनापिनिबिडच्छायात्वमुक्तम् पुनः कीदृशी यत्रपंचावटी अस्तिपंचा
नांमवटानांसमाहारः पंचवटी पंचवटवृक्षमूलेषु पंचसरस्वती गर्ताः गर्तावटौभुविश्वभ्रे इत्यमरः पुनः कीदृशी पांथस्यप्रवासिनः एकमपेक्षितं
जलच्छायादिकं घटयते उद्दीपयति इतिपुनः कीदृशीपुरस्कृतौ शोभमानौतटौ कुड्यापेक्षया द्वारभागौयस्याः सा पुनः कीदृशीसंश्लेषोदारापत्याभिनि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वेशस्तस्य भित्तौ संचये वटीतन्निवर्तकौ पथवटिका पुनः कीदृशी यत्र यत्समीपे गोदा गोदावरी नदी नर्तकी रूपा कीदृशी गोदा तरंगितौ तटौ यस्याः सा पु-
नः कीदृशी गोदा कल्लोलैश्चंचंतः पुटाः जलनिर्गममार्गा यस्यां सा कल्लोलचंचत्पुटी पुनः कीदृशी गोदा अलौकिकोयः पद्मामोदस्तस्य कुटी कूपिका पु-
नः कीदृशी भवाब्धिशकटीपोतरूपा पुनः कीदृशी गोदा भूतक्रियादुःकुटी भूतानां क्रियाभिः सामान्य धर्मैः दुःप्रापा बहुपुण्यलभ्येत्यर्थः अत्र विशेषणेषु
वटीनदीकुटी साहृश्यं चिंत्यं विस्तारभयान्नाभिवृत्तं अत्र भवाब्धिशब्दबलादन्योप्यर्थः संभवति हे रघुत्तम एषा कुटी भवतु कीदृशी पंचानां पृथिव्य प्तेजो वायु

एषां पंचवटी रघूत्तम कुटी यत्रास्ति पंचावटी पांथस्यैकघटी पुरस्कृततटी संश्लेषभित्तौ वटी गोदा यत्र नदी तरंगिततटी
कल्लोलचंचत्पुटी दिव्यामोदकुटी भवाब्धिशकटी भूतक्रियादुष्कटी २२

वाकाशादीनां वटी निहंत्री वटविशातने यां प्रा-
प्य न पुनर्भव इति यत्र यस्यां पंचानां रूपरसगंधस्पर्शशब्दानां अवटी संगतानि वर्तको विधिरस्ति वटवर्जने अत्रेंद्रियाणि स्त्रजयानीति पांथस्य मोक्षमा-
र्गकृतप्रयाणस्य एकानिरुपमा घटी विश्रामस्थानं घट विश्रमणे यत्र यस्यां गोदा गावो वेदवाचः ताः ददातीति गोदा मुनि सभा नदी प्रसिद्धा स्तेनट आविर्भवे
कीदृशी गोदा पुरस्कृता तटी समित्कुशसमृद्धिर्यया सा तटच् समृद्धौ पुनः कीदृशी संश्लेषो दारापत्यादि यस्मिन् निवेशस्तस्य भित्तौ संचये चटी वज्ररूपा वज्रं
वटी पविः सार इति शाश्वतः पुनः कीदृशी रागादिषु प्राप्ता ये जीवाः तेषां तटिनीनिःसारणतीर्थवती पुनः कीदृशी कल्लोलैः दैवेरितस्ततः चंक्रम्यमाणा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निनिकुंजानियस्याः सा कल्लोलोदेववारिणोरितिधरणिः निकुंजपुटयोः पुटइतिविश्वः पुनः कीदृशी दिव्योनैसर्गिकोयअमोदः वासनातस्यकुटी क्षय
करीनिवासक्षययोः कुटीतिचरकः अतएवभवाब्धिशकटीसंसारतारणनौका नन्वेवंचेत्सर्वेकथंनविद्युरितिचेत्तत्राह भूतानांप्राणिनांक्रियाभिर्दूर-
दृष्टैःदुःकटीदुःप्रापेत्यर्थः एतेधातवोकविकल्पद्रुमोचिंत्यास्तद्रूपंच २२ जानकीसन्यस्ताध्वपरिश्रमामुग्धावतारंपुराणपुरुषंवंदनेरम्म तत्रैवकुटीकर
णाज्जातानंदाप्रणमति अहंरामंवंदेइत्यन्वयः कीदृशं क्रीडानांनरक्रूरतिर्यगाद्यवताराणां कल्पवटंअवताराः यतः शक्तिमास्थायक्रीडंतियथेच्छं

क्रीडाकल्पवटंविसर्पितजटंविश्वांबुजन्मावटंपिष्टांडौघघटंधृतांघ्रिशकटंध्वस्तक्षमासंकटम् विद्युतच्चारु
रुचाविधूतकपटंसीताधरालंपटंभिन्नारीभघटंविरुग्णशकटंवंदेगिरांदुर्घटम् २३

ननुभ्रांतिसुगावतारेजी
वोनकिंनेत्याह विसर्पितवटंप्रकटीकृतविश्वतनुं ननुविश्वजनकत्वेन तत्कृतदोषवान् किंनेत्याह विश्वांबुजन्मावटं विश्वमेवांबुजन्मकमलम् त-
त्प्रकाशायआसमंततः वटः सूर्यः यथासूर्यः पद्मंबोधयति ननुतद्गंधादिगृण्हाति तथेश्वरोपीक्षयैवकरोतिनतुतद्दोषभाक् वटः सूर्येतरौलौकेइतिशा
श्वतः सूर्यवन्नाशवान् किंनेत्याह पिष्टांडौघघटंचूर्णीकृतब्रह्मांडसमूहंस्वयमेवनाशकृदित्यर्थः तर्हिसर्वानेव नाशयति किंनेत्याह धृतांघ्रिशक
टंधृतौत्हृदयेरथांघ्रीयैस्ते घ्रतांघ्रयोभक्ताः तेषांसंसारोत्तारणाय वारद्यंपोतमिति एतदेवदर्शयति ध्वस्तंदूरीकृतंक्षमायुक्तानांअंबरूषादीनांसंक

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

टंयेनतंमध्यमपदलोपीसमासः तर्हिभक्तपालकत्वाद्विषमः किंनेत्याह विद्युदिवचारुरुक् यस्यांगदीप्तिस्तयाविधूतः कपटोमायाकृतदंभोयेन तंअतोयः कोपितद्रूपंस्मरति तस्यदंभक्षतिः नेतरेषां अतोज्ञानाज्ञानाभ्यांजीवानामेवविषमत्वंनतुतवेतिभावः ननुएतादृक्कथंप्राप्यतेतत्राह - सीताधरालंपटंभक्तार्थमाविर्भूतमित्यर्थः ननुतर्हिकामीकिंनेत्याह भिन्नाअरयः कामादयएवइभाः मतंगजास्तेषांघटासमूहोयेनतम् ननुजित-

गयम् अथमारीचः भतीतानागतवर्तमानत्रिकालदर्शनोलंकापतेराज्ञामासाद्यचिंतयामास रामादपिचमर्तव्यंमर्तव्यंरावणादपि उभयोर्यदिमर्तव्यंवरंरामोनरावणः २५

कामादित्वादिरहितैर्हिकरिपुः किंनेत्याह विरुग्णशकटंविशेषेणरुग्णाः खंडीकृताः शकटाः शकटादैत्यराजानोयेनशकोयवनराक्षसावितिधरणिः टोमहेश्वरआख्यातइत्येकाक्षरः नन्वेवंमांसर्वेकिंनविद्युरितिचेन्नगिरांदुर्घटंवाचामगोचरं अनिर्वचनीयमित्यर्थः २३ रामादितिवरंरामोनरावणः इत्यस्यायमर्थः रामान्मरणेपरत्रमोक्षः स्यादिहचस्वामिकार्यमित्यर्थद्वयमिति २४ ७ ७ ७ ७ ७





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्फललितेति इतिविचार्यमृगोभूत्वातत्पर्णशालाभ्यर्णंगतः दशरथकुलदीपेरामेसीतया लक्ष्मणेनचसहतत्रकालंगमयतिसति जानकीकनकम-
यकुरंगंसंददर्श कीदृशंदशकंठस्यउत्कंठिनेनउत्कंठयासीताहरणाभिलाषेणप्रेरितंप्रस्थापितमिति २५ देहमितिस्फगमम् २६ सांगमितिजान-
कीतंमायामृगंप्रतिरामंयाचतेस्मप्रार्थयामासेत्यर्थः कीदृशंद्रुतंअचिरभाविनिधनंयस्यसचासौमारीचश्चनंअग्रेधावंतं अतिगहनेक्षणंयथास्या

स्फललितफलमूलैस्तत्रकालंकियंतंदशरथकुलदीपेसीतयालक्ष्मणेन गमयतिदशकंठोत्कंठितप्रेरितंद्राक्कनकमय
कुरंगंजानकीसंददर्श २५ देहेहेममयंहरिन्मणिमयंशृंगद्वयंवैद्रुमाश्चत्वारोपिखुरारदच्छदयुगंमाणिक्यकांतिद्युति ने
त्रेनीलस्फतारकस्फविततेतद्रूचलंप्रोक्षितंतत्तद्रत्नमयंकिमत्रबहुनासर्वांगरम्योमृगः २६ सांगंमायाकुरंगंद्रुतनिधन
निशाचारिमारीचमग्रेधावंतंसंचरंतंक्षणमपिगहनेजानकीयाचतेस्म रामंकामाभिरामंनिशितशरधनुर्धारिणंलक्ष्मणे
नक्षिप्तंतद्रक्षणायोल्लिखिततटभुवासोप्यगात्तद्धाय २७ इतिहनु॰ तृतीयोंकः ३

नथासंचरंतंसोपिरामः लक्ष्मणेनसहतद्
धायक्षिप्रमगात् लक्ष्मणेनानुगत इत्यध्याहारोवा कीदृशेनतद्रक्षणायसीतासंरक्षणार्थंलिखिताधनुः कोट्यातटौद्वारोपांतभागौयस्याः साभूः कुटीये
नरामधनुर्लेखांकोपिनाक्रमिष्यतीति २७ इतिश्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां औत्पातिकोनाम तृतीयोंऽकः ३ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आंदोलयन्निति एककरेणसार्द्धंविशिखमांदोलयन्निति मृगयते अवलोकयति १ हस्ताभ्यामिति मायामृगः प्रांतेषु प्रचलतिप्रांतेषुशालाभ्याशेषुमाया पूर्वकंमृगजात्यनुकरणमाह कदाचिदिति पदाध्याहारःसर्वत्रानुबध्यतेहस्ताभ्याशंहस्तप्रात्यत्वंलेदिलिह आस्वादनेनस्पृशयतां अस्पृश्यत्वंस्फगमम् २ रामोमृगंलक्ष्मणंदर्शयति ग्रीवेति ग्रीवाभंगेनअभिरामं यथास्यात्तथामुहुरनुपतति पश्चादवलोकयति स्पंदनेमहच्चलनेबद्धादृष्टिर्येनसः भूयसाप

आंदोलयन्विशिखमेककरेणसार्द्धंकोदंडकांडमपरेणकरेण धुन्वन् सन्नत्यसुपुष्पलतयापदलंजटानांरामोमृगंमृगयते वनवीथिकास्फ १ हस्ताभ्यांसमुपेतिलेढिचतृणंनस्पृशयतांगाहतेगुल्मान्प्राप्यनिवर्ततेकिसलयानाघ्रायचाघ्रायच भूयस्त्रस्यतिपश्यतिप्रतिदिशंकंडूयतेस्वांतनुंदूरंधावतितिष्ठतिप्रचलतिप्रांतेषुमायामृगः २ ग्रीवाभंगाभिरामंमुहुरनु पततिस्पंदनेबद्धदृष्टिः पश्चार्द्धेनप्रविष्टःशरपतनभयाद्भूयसापूर्वकायम् दर्भैरर्द्धावलीढैःश्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मापश्योदग्रप्लुतत्वाद्वियति बहुतरंस्तोकमुर्व्यांप्रयाति ३

श्चार्द्धेन पाश्चिमशरीरभागेनमदीय शरपातभयात् पूर्वकायंप्रविष्टः पश्चात्संकुचितगात्रइति अर्द्धभक्षितैः दर्भैः कीर्णंविक्षिप्तंवर्त्मयेनसः कीदृशैः दर्भैः श्रमेणाविवृतमत्युद्घाटितंयन्मुखं ततोभ्रंशिभिः पातुकैः एनंपश्यउदग्रप्लुतत्वात्उत्कर्षोत्पतनात् वियत्याकाशेबहुतरंप्रयातिगच्छति भूमौस्तोकमल्पंप्रयाति ३ ७ ७ ७





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततो वनांतरे बाणेनेति यावत् रघुवीरो बाणेन मृगं विव्याध तावदेव तपस्विवेषधारी दशाननः इह सीतासमीपे आजगामेत्यन्वयः ४ मारीचेति रामे मारी
च मृगयाव्यग्रे सति रावणे प्राप्ते सति अस्याः सीतायाः लोचने भयात्कुरंगिणामिव पश्यामि किमप्यनिर्वचनीय नेत्रलौल्यं दृष्ट्वा ननंदेति भावः ५ सइति-
स रावणो व्याहरदित्युवाच किं तदाह हे धर्मिणि अतिथ्यदानादानपुण्यपापज्ञे भिक्षां देहि लक्ष्मणेन कृताया लक्ष्मणः चिन्हस्य लेखा तां अलंघयन् स

बाणेन दिव्येन रघुप्रवीरस्ततो मृगं वक्षसि बद्धलक्ष्यः विव्याध यावत्तरसा तपस्वी दशाननस्तावदिहाजगाम ४
मारीचमृगयाव्यग्रे रामे प्राप्ते च रावणे भयादिव कुरंगिणामस्याः पश्यामि लोचने ५ स व्याहरद्धर्मिणि देहि
भिक्षां प्रलंघयन् लक्ष्मणलक्ष्मलेखाम् जग्राह तां पाणितले क्षिपंतीमाकारयंतीं रघुराजपुत्रौ ६

न् तद्बहिरागत्य पाणितले क्षिपंतीम् भिक्षां ददतीं सीतां जग्राह हस्ते धृतवान् कीदृशीं रघुराजो दशरथस्तत्सुतौ रामलक्ष्मणौ आकारयंतीं आह्वयंतीम्
६ जटायुर्दशरथमैत्रीमनुस्मरन् रावणं ज्ञात्वा कथयति रे रे इति नीचसंबोधने भो अहो परदारचोर त्वया अधीरं तूर्णं यथा स्यात्तथा किं गम्यते धीरास्तु श
नैर्गच्छंति न त्वरया अरे तिष्ठ स्वयमहं जटायुः प्राप्तोस्मि अधिष्ठितो अधिवसितः चंदनाचलस्य मलयपर्वतस्य तटो येन एतेन प्राशस्त्यमुक्तम् एनां मुंच

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ननु इयमेव प्रयातीतिचेन्न कीदृशी पतिरेवदेवतायस्याः सातांचेन्नत्यजसितर्हितवउरसः सकाशात्गृध्राः तदीयंयच्चंडंतुंडंतदेवांकुशस्तेनयत्क्रूरं अवस्क
रणं ततोयेव्रणास्तेभ्योनिसृतमसृक्रुधिरंपास्यंति यद्वा एकमेवपदं व्रणेभ्योनिसृतमसृक् यस्मिन्नत् उरसः उरः पास्यति कर्मणिषष्ठी तदवस्करणंप्रो
क्तं तुंडेनोद्धिद्यकर्षणमितिहलायुधः ७ रावणंज्ञात्वाअबलाशौर्यकुलवान्चौर्यंकरोषितत्तुत्वयिनसंभवतीत्याह जन्मब्रह्मकुलेइतिहरार्चनविधौ-

रेरेभोपरदारचोरकिमरे धीरंत्वयागम्यतेतिष्ठाधिष्ठितचंदनाचलतटः प्राप्तोजटायुःस्वयम् मुंचैनांपतिदेवतांन
खलुचेन्मच्चंडतुंडांकुशक्रूरावस्करणव्रणासृग्गुरसःपास्यंतिगृध्रास्तव ७ जन्मब्रह्मकुलेहरार्चनविधौकृत्वाशि
रः कृंतनंशक्तिर्वज्रिणिघोरदंडदलनव्यापारशक्तंमनः हेलोल्लासितकेलिकंदुकनिभः कैलासउत्पादितस्तत्किंरा
वणलज्जसेनहरसेचौर्येणपत्नींरघोः ८

शिरः कृंतनं कृत्वावज्रिणि देवेशेशक्तिः मनः घोरदंडदलनव्यापारशक्तंयेघोरदंडादुर्निग्रहास्तेषांनिग्रहव्यापारे शक्तं समर्थं भवताकैलासो गिरिरुत्पादि
तः कीदृशः हेलयाऽनायासेनउल्लासितः उद्भ्रमितोयः केलयेक्रीडार्थंकंदुकः तत्सदृशः यथैवकेलिकंदुकः तथैवगिरिरितिभावः तत्तस्मादेवंबलेस
तिचौर्येणयत् रघोः रामस्यपत्नीं हरसे तत्किंकस्मान्नलज्जसेगूढाक्षेपः ८



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रावणः सक्रोधंस्वगतंच अयंमैनाकोगिरिः किंकिंवितर्के अयंकः पुरतोभूत्वाअव्याहतंदेवैरप्यखंडितंमदीयंमार्गरुणद्धि सपक्षत्वात् तस्यमैनाकस्यश-
क्तिर्मन्मार्गरोधनसामर्थ्यंकुतः यतःसगिरिः महेंद्रादपिइंद्रसकाशादपियद्वज्रपतनंतस्माद्देवभीतः इंद्रएवमत्तोबिभेतितन्निर्जितस्यगिरेर्मयिकाशक्तिरि
तिभावः तत्र्धयंताक्ष्र्योस्तिनसोपिगरुडः निजेनविभुनासमंविष्णुबलतुल्यबलंमांरावणंजानाति रावयतिस्वबलेनलोकानितिरावणः हेतिकष्टंज्ञातंए

मैनाकः किमयंरुणद्धि पुरतोमन्मार्गमव्याहतंशक्तिस्तस्यकुतः सवज्रपतनाद्भीतोमहेंद्रादपि ताक्ष्यर्यस्सोपिसमंनिजेनवि
भुनाजानातिमांरावणंहाज्ञातंसजटायुरेषजरसाक्लिष्टंवधंवांच्छति ९ माभैषीः पुत्रिसीतेव्रजतिममपुरोनैषदूरंदुरात्मा
रेरेरक्षः क्वदारान्रघुकुलतिलकस्याप्यपहृत्यप्रयासि चंच्वाक्षेपप्रहारत्रुटितधमनिभिर्दिक्षुविक्षिप्यमाणैराशापालोप-
हारंदशभिरपिभृशंत्वच्छिरोभिः करोमि १०

षः सजटायुः सः कः यः जरसावार्द्धक्येनव्याप्तः सन् वधंवाञ्छति हाकष्टंवृद्धस्यहननेकिंयशइ
तिकष्टंविजयोयमलंकारः तदुक्तंदंडिना यःपूर्वोत्तरपक्षाभ्यांनिर्णेताभवतिस्वयं शब्दचातुर्यतोविज्ञैर्विजयः समुदीरितः ९ जटायुः क्रोधमभिनीयमाभै
षीः भयंमाकार्षीः दारशब्दोभूम्न्येवदशभिस्त्वच्छिरोभिर्दशानामाशापालानामुपहारंकरिष्यामिकरोमीत्यर्थः कीदृशैः शिरोभिः दिक्षुदशसुदिशा
सुविक्षिप्यमाणैः पुनःकीदृशैः चंचोः आक्षेपेणयेप्रहारास्तैस्त्रुटिताः धमन्योनाड्योयेषांतैः नाडीतुधमनिः शिरेतिविश्वः अन्यत्सुगमम् १० ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अक्षेति पक्षिराट् जटायुः रक्षःपतेः रावणस्य अक्षं चक्रांतरालं काष्ठं विक्षिपति विरुद्धं चालयति दलयते त्रोटयति मृद्गाति मर्दयति गर्जति स्वयं तर्जयति तमभिभवति तिरस्करोति आलंबते मार्गमवलंब्य तिष्ठति ताडयति तं प्रहरति आकर्षयति तत्कोशान् विलिखति अवलुंपति तद्धासांस्य पहराति प्रचलति स्वपक्षलाघवमाविः करोति न्यंचति शिरस्तत्प्रहारपातेन स्वयं नम्रीभवति उदंचति स्वचरणकृततत्प्रहारवंचनाय उच्चैर्गच्छति ११ रावणः क्रोधं नाटयति क्रुद्ध इति करतलप्रहारः स एव शिलातलस्तेन १२ जटायुः आत्मानं शोचयन्नाह राज्यं विषयो यस्याः त्वद्राज्यं पालयामीति मैत्री न निर्व्यूढा न निष्पन्ना स्फुरत्कृतिनो रामस्य यतः किमपि कृतं न जातं अत एव भाग्यरहितमिति संतापमकरोदिति १३

अक्षं विक्षिपति ध्वजं दलयते मृद्गाति नद्धं युगं चक्रं चूर्णयति क्षिणोति तुरगान् रक्षःपतेः पक्षिराट् रुंधं गर्जति तर्जयत्यभिभवत्यालंबते ताडयत्याकर्षत्यवलुंपते प्रचलति न्यंचत्युदंचत्यपि ११ क्रुद्धस्ततो दृढचपेटशिलातलेन रक्षः पिपेष गहने द्रुतपक्षिराजम् ईषत्स्थितासुरपतद्भुवि राम रामरामेति मंत्रमनिशं निगदन् मुमुक्षुः १२ न मे मैत्री निर्व्यूढा दशरथनृपे राज्यविषया न वैदेही त्राता हठहरणतो राक्षसपतेः न रामस्यास्येंदुर्नयनविषयो भूत्स्फुरत्कृतिनो जटायोर्जन्मेदं वितथमभवद्भाग्यरहितम् १३



छ छ छ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हारामेतिउपेक्षसे उपेक्षांकरोषि १४ आकृष्येति आकृष्यमाणासैरध्वजी सीरध्वजोजनकस्तदपत्यंस्त्री सैरध्वजीसीता अद्रिमौलौगिरिशिखरेस्वा
भरणानि मुक्त्वा उन्मुच्यमारुतिंहनुमंतमुवाच किमुवाचेत्याह वरायश्रेष्ठायरामायदेवरायपतिभ्रात्रेलक्ष्मणायचाभरणानिदेयानि १५ रामेतिद

हारामहारमणहाजगदेकवीरहानाथहारघुपतेकिमुपेक्षसेमाम् इत्थंविदेहतनयांमुहुरालपंतीमादायराक्षसपति
र्नभसाजगाम १४ आकृष्यमाणाभरणानिमुक्त्वासैरध्वजीमारुतिमद्रिमौलौ उवाचरामायसलक्ष्मणायवरायदेयानि
सदेवराय १५ रामः शुष्कस्थाणौदक्षिणेरटंतंकरटमवलोक्यपुनरागच्छन्निजप्राणप्रयाणमेवमन्वानः क्षणंविश्रम्य
मायाकुरंगंविनिहत्यरामोभ्रात्रासहागत्यचपर्णशालाम् कोणत्रयेषुप्रसमीक्ष्यसीतांदृष्टश्चतुर्थेनचशोकभीत्या १६
इतिश्रीहनुमन्नाटकेचतुर्थोंकः ४

क्षिणभागे शुष्केस्थाणौनीरसवृक्षखंडे करटंअवलोक्यपुनरागच्छन् मारीचंहत्वा पर्णशालां
प्रत्यागच्छन् सन् काकेतुकरटारिष्टबलिपुष्टसकृत्प्रजाइत्यमरः कोणत्रयेषुसीतांप्रसमेक्ष्यचतुर्थः शालाकोणस्तेनरामेणनदृष्टः कयातदला-
भातेशोकभीत्याइत्यर्थः १६ इतिश्रीमिश्रदा॰ हनुमन्नाट॰ टीकायांसीताहरणंनामचतुर्थोऽकः ४ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ततोरामस्यकिंवृत्तमासीत्तदाह द्यूतेति विधिवशाद्दैवयोगाज्जनकात्मजायाइदमुत्तरीयंमयाप्राप्तमिदं किंतद्यनदोर्नित्ययोगात् यत् द्यूतेपणइत्या
दिसर्वंस्रुगमम् १ तच्चरणचिन्हमलक्ष्यविचिकित्साति बहिरिति बहिरपिपर्णशालाबहिर्भागेपिकाचित्स्त्रियः पुरुषस्यवापादानांपंक्तिरंतःकुटी

गद्यम् रामः प्राणोत्क्रमणसमयादपिघोरतरंवियोगसमयमधिगम्यपर्णशालांतरालमालोक्यकथमपिविदीर्णत्हृदय
मार्गादुज्जिगमिषून्प्राणान्धारयन्तदुत्तरीयमुपलभ्यजानकींस्मरन्नरोदीत् द्यूतेपणः प्रलयकेलिषुकंठपाशः क्री
डापरिश्रमहरंव्यजनंरतांते शैय्यानिशीथसमयेजनकात्मजायाः प्राप्तंमयाविधिवशादिदमुत्तरीयम् १ बहिर
पिनपदानांपंक्तिरंतर्नकाचित्किमिदमियमसीतापर्णशालाकिमन्या अहमपिकिलनायंसर्वथाराघवश्चेत्क्षण
मपिनहिसोढाहंतसीतावियोगम् २

मध्येपिनतदिदं किमितिविचिकित्सा इयंयात्रस्थासा असीतैवनपर्णशालैवान्या किंकिलसर्वथा अयमहंराघवएवनचेत्स्यात्तर्हिक्षणमपिसी
तावियोगंनसोढा एतेनोन्मादोदर्शितः तदुक्तंरसोदधौ मौढानंदायतोविरहात् योद्भ्रमःसउन्मादइति २ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मध्योयमिति भोमैथिलि ज्ञातंकुत्रापित्वदीयंचिन्हमपिनलक्ष्यतेतः कांतारेच अधुनामाद्विनाभूतावसरेसकलैरेतैर्विनाश्यहृत्वानीतासिगृहीतासि
पशुवत् यथापशुर्विनाश्यगृह्यतेतद्वत् येनांगेनयेषामवमानः तदंगंतैरेवगृहीतमित्याह मातंगैः गजैर्हंसैश्चगमनमेवकथंकथंविभक्तमिति अहोए
तदाश्चर्यं उभयैरेकंकथंगृहीतमिति एतेनगुणकीर्तनावस्थादर्शिता सोत्कारसौंदर्यौ वैरेहकांताविषयप्रशंसनंस्याद्गुणाख्यानमिति ३ युक्तेति आ

मध्योयंहरिभिः स्मितंहिमरुचानेत्रेकुरंगीगणैः कांतिश्चंपककुड्मलैः कलरवोहाहाहृतःकोकिलैः मातंगैर्गमनंकथं
कथमहोहंसैर्विभज्याधुनाकांतारेसकलैर्विनाश्यपशुवन्नीतासिभोमैथिलि ३ युक्तमेवहिकैकेय्यायदहंप्रेषितो
वनम् ईदृशीयस्यमेबुद्धिर्मृगः क्वापिहिरण्मयः ४ आलिंगितात्रसरसीरुहकोरकाक्षीपीताधरेतिमधुरेविधु
मंडलास्ये रंगावतारमकरंदविमर्दितानिपुष्पाण्यमूनिदयितेक्वगतेत्यरोदीत् ५

त्मानंशोचन्नाह ईदृशी अ संबद्धा असं
बद्धत्वमाह हिरण्मयोमृगः क्वापिदृष्टः श्रुतोवास्तेनक्वापीत्यर्थः ४ प्रकीर्णपुष्पमालांपर्णशालामालोक्याह आलिंगितेति रामइतिअरोदित्
इतिकिंहेदयिते त्वंक्वगता अत्रत्वंआलिंगितामयेतिशेषः आलिंगनस्फुरत्वेननेत्रसंकोचात्कोरकत्वमुक्तम् कलिकाकोरकःपुमान् इत्यमरः अति
मधुरत्वेहेतुः विधुमंडलसदृशास्यारंगानांकेलीनामवतारआविर्भावस्तत्रयोमकरंदः कोमलरसः तेनमिश्रितानीत्यर्थः ५ ६ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गव्हराणि सघनानि कांताराणि दुर्गवर्त्मानि येषु तानि गाहं गाहं अवगात्य अत्र सर्वत्र त्स्यबर्थेण सुख् तस्मिन् सति द्विलंकामभल्लीरिव वल्लीः दृष्ट्वा दृष्ट्वा स्मा



गाहं गाहं गव्हर कांतारवनांतान् दर्शन् दर्शन् दर्पक भल्लीरिव वल्लीः स्मारं स्मारं दूरगतां तामथ
कांतां रामः कांतामद्रिचरो दीनमरोदीत् ६ सभूरजोरंजितसर्वकायो बभौ विभुर्मन्युविदीर्ण
चेताः योषिद्वियोगानलदह्यमानं स्वकांतमालिंगयतीव भूमिः ७ सीतेति हा जनकवंशजवे
जयंति हा मद्विलोचनचकोरनवेंदुलेखे इत्थं स्फुटं बहु विलप्य विलप्य रामस्तामेव पर्णवसतिं प-
रितश्चचार ८ हा जानकि प्रचलितोत्पलपत्रनेत्रे हा मे मनः कमलकाननराजहंसि एष प्रियेत
ब वियोगजवन्हिदग्धो दीनं प्रयामि भवतीं क्व विलोकयामि ९

रं स्मारं स्मृत्वा स्मृत्वा कीदृशीं कांतां-



कस्य रामस्करवस्य अंतो अस्याः तां विरहेण रामदुःखदामिति अद्रिचरो भूत्वा पर्वतचरो भूत्वा दीनं यथास्यात्तथा अरोदीत् ६ ७ ८ ९ ५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हेवृक्षाः यूयंपर्वतस्थाउच्चस्थैः सर्वंदृश्यत इति ध्वनितम् केनापिसीतानीताहतावाभवतांमध्येकेनापि दृष्टा कीदृशायूयं गिरिगहनलतावायुनावीज्यमा-
नाएतेनवायुवशात् तत्रस्थापिसीताभवद्भिर्ज्ञायतेएवेत्युक्तम् इत्युक्तेवृक्षाऊचुः भवान्कः राघवआह अहंरामः शोकएवशुक्रोग्निस्तेनदग्धः समार्चिर्द
मुनाः शुक्रइत्यमरः तर्हिकीदृशीसीतेत्यपेक्षायामाह बिंबोष्ठीत्यादिबन्धानागेंद्रस्येवकांचिर्ययासा यद्वा बद्धानागेंद्रस्यकांचीययासा करिकुंभमणिस्तो-

रेवृक्षाःपर्वतस्थागिरिगहनलतावायुनावीज्यमानारामोहंव्याकुलात्माद‍शरथतनयः शोकशुक्रेणदग्धः बिंबोष्ठीचा
रुनेत्रीस्तविपुलजघनाबद्धनागेंद्रकांचीहासीताकेननीताममत्दृदयगताकोभवान्केनदृष्टा १० हेगोदावरिपु
ण्यवारिपुलिनेसीतानदृष्टात्वयासाहर्तुंकमलानिचागतवतीयाताविनोदायवा इत्येवंप्रतिपादपंप्रतिनगंप्र-
त्यापगंप्रत्यगंप्रत्येणंप्रतिबर्हिणंततइतस्तांमैथिलींयाचते ११

मनानारत्नोत्करैर्धिता मध्येकुंभाकृतिः स्वर्णसानागेंद्रास्त्ययामते-
ति १० ततोवतीर्यगोदावरीमासाद्याह हेगोदावरि त्वयासीतानदृष्टा कमलान्याहर्तुं आगतवतीरम्यवारिपुलिनेविनोदायवाआगता इत्यनेनप्रकारे-
ण एवंयथागोदावरीपृष्टातथैवप्रतिपादपं पादपंपादपंप्रतिजानकींयाचतेस्म इतिसर्वत्रयुज्यते आपगानदीअगोगिरिः एणोमृगः ११ ६९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वदयूयंके एकवचनेबहुवचनं वैक्लव्यादेव तत्रलक्ष्मणः हेनाथनाथ आदरेवीप्सासंभ्रमेवा यद्वा हेनाथनाथनाथाः ब्रह्मादयस्तेषामपिनाथस्स्वामिन् इ
दंवैक्लव्यंकिं अहंतेदासः लक्ष्मणोस्मि हेवत्सअहंकः लक्ष्मणः सइतिप्रसिद्धः आर्यएवभगवानचिंत्यैश्वर्यः रामः सआर्यः कः लक्ष्मणः राघवः रघुवंशज-



पुनर्लक्ष्मणमासाद्यवैक्लव्यंनाटयति केयूयंवदनाथनाथकिमिदंदासोस्मितेलक्ष्मणः कोहंवत्ससआर्यएवभगवाना
र्यःसकोराघवः किंकुर्मोविजनेवनेततइतोदेवीसमुद्वीक्ष्यतेकादेवीजनकाधिराजतनयाहाहाप्रियेजानकि १२ सौमि
त्रिणासहरामः अत्रांतरेवनांतंपर्यटन्जनकतनयातापिनः पापिनोरजनिचरपतेर्भुजभुजंगमंडलीखंडितोरगव
धूवैधव्यधातारंविपक्षरक्षसानिहतंघोरसमरमूर्छितंपक्षिराजंजटायुषंभुग्नंचरावणरथमालोक्य ज्ञात्वादशर
थस्यैनंमित्रंशत्रुनिषूदनम् हाताताकिमिदंनामरामःपक्षीद्रमब्रवीत् १३

न्माराम: अत्रविजनेजनशून्येवनेकिंकुर्मः लक्ष्मणः इतस्ततः देवीसमावीक्ष्यतेरामः देवीका लक्ष्मणः जनकाधिराजतनया रामः हाकष्टं हेप्रिये हेजा
नकि विषमोयमलंकारः उक्तंचवीरभानौ उक्तिप्रत्युक्तिचातुर्याभिबद्धोविषमोमतइति १२ इदंतवकिंजातम् १३ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अर्द्धेति दिनस्यार्द्धे देवदिनस्यार्द्धेसति तेनचैत्रउक्तः मकरादिषड्दिनंकर्कादिषड्निशेति श्रीपतिः मासेनस्या दहोरात्रः पैत्रोवर्षेणदैवत इत्यमरः तत्राप्यर्द्धरात्रे
सति पितृणामर्द्धरात्रेसति अकृष्णपक्षेपितृणांपाक्षिकीरात्रिर्भवति तदर्धेपक्षार्द्धेसति कस्यपक्षस्येत्यपेक्षायामाह कीदृशेअर्द्धरात्रे अकृष्णपक्षे अकृ-
ष्णः शुक्लः पक्षोयस्मिन् एतेनचैत्रशुक्लपक्षोद्योतितः पुनः कीदृशेअर्धरात्रे अर्धः अष्टकलश्चंद्रोयस्मिन् तत्रापिकस्यांतिथौत्द्दतेत्यपेक्षायामाह यत्रयस्मि
न्दिने सिताष्टमी सितेनशुक्लेण युता अष्टमी मध्यमपदलोपीसमासः तत्रापिकस्यांवेलायामित्यपेक्षायामाह कस्मिन्सति अर्धभास्करेसति मध्यं

जटायुः अर्द्धरात्रेदिनस्यार्द्धेअर्धचंद्रेर्धभास्करे रावणेनहृतासीताकृष्णापक्षेसिताष्टमी १४ ७

दिनवर्तिन्यादित्येसति सर्वपदेश्चैवमुक्तंभवति चैत्रशुक्लपक्षसिताष्टमीमध्यान्हेसीताहृतेति केचिदेवंव्याकुर्वंति कृष्णपक्षेसीताहृता कृष्णोस्त्री
माघकृष्णयोरितिचरकः कीदृशेकृष्णापक्षे पितृणामर्द्धरात्रेशुक्लपक्षः पितृणांरात्रिः पुनःकिंभूते दृष्टः माघस्नाननिमित्तं अर्द्धभास्करोयस्मिन् अर्द्धो
दितेरवौस्नातोमाघेस्वर्गमितोभवेत् अन्यत्पूर्ववत् एतदर्थेनएवमुक्तंभवति माघशुक्लपक्षसिताष्टमीमध्यान्हेसीताहृतेति उक्तंचवाराहपुराणे चै
त्रमाससिताष्टम्यांमुहूर्तेवृंदसंज्ञिते राघवस्यप्रियांसीतांजहारदशकंधर इतिवृंदः पूर्वाण्हइतिधरणिः १४ ७ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भग्नोयमिति वज्रांकुरवत् वज्रधारावत् क्रूरंदुःसहंयदवस्करणंतुंडेनोद्दिध्याकर्षणंतेनभंगुरेवक्रेलसंत्योयेकोटीधनुष अग्रभागौताभ्यांसकाशात् त्रुटं
तीज्यायस्य तद्धनुरपिकथंभग्नमितीत्युक्त्वापुनः दृष्टवत्सीतामाह सीतेधन्ययात्वयासपक्षींद्रोजटायुः तथायुध्यमानोदृष्टः धार्मिकदर्शनात् धन्यात्वं



यत्रेतिवाक्यशेषः रामः भग्नोयंकथमस्तिरावणरथस्तातेनवज्रांकुरक्रूरावस्करणेनभंगुरलसत्कोटित्रुटज्ज्यंधनुः
हेसीरध्वजराजपुत्रिसतथादृष्टस्त्वयाधन्ययापक्षींद्रोदशकंठकुंजरशिरःसंचारिपंचाननः १५ तातत्वंनिजतेज
सैवगमितःस्वर्गंव्रजस्वस्तितेब्रूमस्त्वेकमिमांवधूरत्द्दतिकथांतातांतिकेमाकृथाः रामोहंयदितद्दिनैःकृतिपयैर्व्रीडा
नमत्कंधरःसार्द्धंबंधुजनेनसेंद्रविजयीवक्तास्वयंरावणः १६

यःदशकंठएवकुंजरः तच्छिरःसुसंचरणसीलःसिंहइति १५ सीतात्द्दतिंदशरथंमाश्रावयेतिलज्जयावारयति हेतातत्वंनिजतेजसैव निजदर्पे-
णैवस्वर्गंगमितःप्रापितःव्रज तेस्वस्तिस्वर्गान्तेमोक्षोस्तु परंतुएकंनिरुपमंत्वांप्रतिब्रूमः किंतदित्याह इमामिति बंधुजनेन कुंभकर्णादिनाइंद्रविजयी
मेघनादस्तेनसहितः वक्तासीघ्रंवदिष्यतीति १६ ५ ५ ५ ५ ५ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आस्तुस्यात्कोपपीडयो रित्यमरः अमोघाइति काननेषुमृगीवधेमृगीवधनिमित्तम् कृष्टाः आकृष्टाः येनालीकाः बाणाः तस्यरामस्यतेअमोघाः सफ-
लाः नालीकशरमार्गणाइतिविश्वः दूरान्नहननमितिचेत्तत्राह दूरघाती दूरादेव हंतुंशीलमस्यरामस्यास्तीति बाणसफलत्व दूरघाति त्वयोः सतोरपिसी·
तानयनशंकयाइमेनेत्रेसीतायाः नयनेभवतः इतितंनेत्रसादृश्यमात्रमासांनेत्रेतिष्ठतीति तद्धननेस्वीयापराधः स्यादितिशंकया इतिकिंप्राप्तदयावान्भूदि

रामः वनेचरान्मृगान्विलोक्य आः खलुदुरात्मनाममीषांरूपेण मारीचिविना प्रपंचमवलंब्यप्राणवल्लभाश्लेषतोविश्लेषितो
हमिति अहंपुनः मृगीचक्रवधेनकुरंगाणांप्रियाविरहमुत्पादयामीतिविचार्य अमोघाः कृष्टनालीकाः काननेषुमृगीवधे रामः
किंदूरघातीतिसीतानयनशंकया १७ ततः कथमपिभगवतिभास्करे ऽस्ताचलावलंबिनिप्रलयकालोदितप्रचंडमार्तंडमं
डलमिवोदितंचंद्रमंडलंतरुणकोपारुणदारुणंतरुणिनंदनमिवावलोक्य रामः सौमित्रेननुसेव्यतांतरुतलंचंडांशरुज्जृंभ
तेचंडांशोर्निशिकाकथारघुपतेचंद्रोयमुन्मीलति वत्सैतद्भवताकथंनुविदितंधत्तेकुरंगंयतः क्वासिप्रेयसिहाकुरंगनय·
नेचंद्राननेजानकि १८

त्यर्थः इतिशब्देनदयाकिंशब्देनप्राप्तिरिति समाप्तोचपरिच्छेदे दयायामितिसंमतमितिधरणिः निंदनेचवितर्के
च प्राप्तौप्रश्नेकिमव्ययमितिविश्वः शंकोत्कारसोदधौ स्वीयापराधचौर्यादितोमताशंकेति १७ वियोगिपापिविरहिजीवेषुतरुणोस्त्रियामितिचरकः व

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लात्तरुणेषु वियोगिषुयः कोपस्तेनारुणंचंद्रमंडलं यद्वातरुणेषु पापिजनेषुयः कोपस्तेनारुणंतरणिनंदनंयममिवेति कुरंगनयननिभेचंचलेनयनेयस्याः
सामध्यमपदलोपीसमासः उक्तिप्रत्युक्त्यार्थज्ञानंविषमोयमलंकारः तल्लक्षणंपूर्वमुक्तं १८ मंदरेणेति हेपापिन् परसंतापदातः मंदरेणगिरिणाअ-
ब्धिमंथनेनमथितोसि नचूर्णीकृतः ततोपितमसाराहुणापिनज्वालितः क्रोधाग्निनानदग्धः तमस्तुराहुः स्वर्भानुरित्यमरः स्वाशक्तौमोहिनीसूचनेनापिदुरा-
त्मन्नित्युक्तंताभ्यांपरिमुक्तमपि त्वां अहमेवशतधाशतप्रकारंपरिनिन्ये प्रापयामि यदित्वंजानकीमुखसमोनस्याः अत्रोन्मादावस्थांतरंगवाचिकव्यथोदि

रामश्चंद्रमधिक्षिपति मंदरेणमथितोसिनपापिन्ज्वालितोसितमसानदुरात्मन् त्वांशरेणशतधापरिनिन्येजान
कीमुखसमोयदिनस्याः १९ अपिचलक्ष्मणंप्रति सौमित्रेदाववन्हिस्तरुशिखरगतोवार्यतांनिर्जरौघैः कावार्तादा
ववन्हेरयमुदयगिरेरुज्जिहीतेहिमांशुः धत्तेधूमंहिमांशुः कथयकथमयंनैवधूमोधरण्याश्छायेयंसंगताभूदयि
धरणिसुतेकुत्रकांतेसिसीते २०

तोयासोदर्शितः तदुक्तंरसोदधौस्यादुन्मादः कांताचित्तव्यथागोचरायासः कायिकवाचिक
भेदाद्द्विधोदितोयंव्यथोदितायासः तत्समद्रव्यंदृष्ट्वायदुपालंभः सवाचिकाख्य इति तत्समंद्रव्यंमुखादिसदृशंचंद्रादि १९ अत्राप्युक्तिप्रत्युक्तिः वार्य-
तां शाम्यतांउज्जिहीतेउदयतेचंद्रेश्यामत्वमालभ्याह धूममिति अयिइतिकोमलामंत्रणे २० ५ ५ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आत्मनित्हृदये एकेकवयः शशांकेचंद्रे अंकंजगुः अंकंपदेलक्षणेचहरशिरस्थानंतदभावादनुज्वलत्वं एकेपंकंवियोगिदुःखदातृत्वजन्यपापंश्याममेव अ-
स्त्रीपंकंपुमान्पाप्माइत्यमरः एकेअस्मिन्नेवप्रतिबिंबितांगंकुरंगमेतंचंद्रवाहनंमृगंजगुः मृगप्रतिबिंबमितिचशब्दात् पुनर्ग्रहणंप्रतिबिंबितांगंभूमंडलंज
गुः उक्तवंतः उक्ताक्षेपोयमिति अहंतुप्रियायाः सीतायाः सकाशादुद्भूतोयोग्निस्तस्य धूमंशंकेमन्येकीदृशस्योद्भूताग्नेः ममवियोगजातस्य २१ अथसी

रामः सकरुणंआत्मनिप्राणवल्लभायाः परमप्रेमाणमधिगम्य शंकेशशांकेजगुरंकमेके पंकंकुरंगंप्रतिबिंबितांगम् धू
मंचभूमंडलमुद्भूताग्नेर्वियोगजातस्यममप्रियायाः २१ रेरेनिर्दयदुर्निवारमदनप्रोत्फुल्लपंकेरुहान् बाणान्त्वंसंवृणुसंवृ
णुत्यजधनुः किंपौरुषंमांप्रति कांतासंगवियोगजातहुतभुक्ज्वालाप्रदग्धंवपुः शूराणांमृतमारणेनहिवरोधर्मः प्र
युक्तोबुधैः २२

तास्मरणादुच्छ्रितंकाममाक्षिपति रेरेइति रेरेदुर्नयकृत्यज्ञानहीन भोदुर्निवारदुराग्रहमदन पं
केरुहानेवबाणान् संवृणुसंवृणु उपसंहरेति संभ्रमेवीप्सामत्यध्याहारः वपुः कांतासंगस्ययोवियोगः तेनजातोयोहुतभुक् अग्निस्तस्यज्वालाभिः
प्रदग्धमस्तीति अन्यत्सुगमम् २२ कामव्यथामनुभूयान्यवियोगिनोनुकंपयन्निवाह आपुंखाग्रमिति अथवामांप्रहरबाणान् मासंवृणु हेकामते
अमीपंचैवबाणाः क्षोभणमोहनशोषणविद्रावणनिलायनसीलाः एतेआपुंखाग्रंयथास्यात्तथासमंएकदेवममनसित्हृदयेमग्नाः संतिइदंमदीयंव

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पुः ते तव बाणैः सार्द्धं मदनाग्निना निर्दग्धं परवज्जातं यद्वा मदनोतिसंबुद्धिः अग्निना वियोगाग्निना जातं पूर्वं यज्जितं तज्जितमेव पुनरपि अधुना हे
काम भवता जनो लोकः जेतुं शक्यो नयतस्त्वं निरायुधोसि दग्धबाणत्वादन्यास्त्राभावाच्च कष्टं यथास्यात्तथा एक एवाहं दुःखी स्याम् त्वद्बाणशल्यमरण
त्वात् अन्यो लोकः सुखं जीवतु त्वदातंकाभावात् २३ हे अशोक वृक्ष आवयोः सर्वं वृत्तं तुल्यं परंतु एतन्महद्वैलक्षण्यं यत् त्वं अशोकः अहं धात्रा केना

अथवा आपुंखाग्रममी शरा मनसि मे मग्नाः समं पंचते निर्दग्धं मदनाग्निना वपुरिदं तैरेव सार्द्धं पुनः कष्टं काम निरायुधो
सि भवता जेतुं न शक्यो जनो दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु २३ तत्रापि क्षणं विकासिताशोकतरुतले वि-
श्राम्याहस्मदाशरथिः रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायांति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मा
मपि कांतापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोस्तुल्यं सर्वमशोक केवलमहं धात्रा सशोकः कृतः २४

पि दुरदृष्टेन सशोकः कृतः प्रियाविरहितत्वात् तुल्यत्वमेव द्योतयति शिलीमुखाः भ्रमराः बाणा अपि वा स्मरधनुर्मुक्ताः पुष्पेभ्यो निर्मुक्ताः पुष्पधन्वा उभ
यताप्यात्यः अशोकः स्त्रीपादस्पर्शात् अलं विकसतीति श्रुतिः रामेपि पादतलाहतिः पद्माख्यबंधाभिप्रायेण तदुक्तं कामावतारे धृतैकपादाजघनेकु
र्वत्यन्यपदाहतिम् शनैः शनैर्निधुवने पद्मबंधस्तदा मत इति २५ ७ ७ ७ ७ ७ ७ ७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ऊगमं एतेनदैवस्यदुर्लंघ्यत्वमुक्तम् २५ चंडकरोरविः तद्वदाचरति सूचीवस्त्रवेधनलोहस्तत्कुल्लवदाचरति स्फुलिंगोग्निकणः पुमानितिविश्वः एतत्स
घेनकुङ्कमितंद्योतितं तदुक्तंरसोदधौ शशिपादीरालेपंपंकजयाम्यानिलादिरूपयातिसर्वंदुःखवदेतत्कुङ्कमितंतत्रसंभवतीति २६ तद्विरहेप्राणधार-
णादावात्मनिकाठिण्यंप्रारब्धावश्यभोग्यत्वंदर्शयति मांसमिति इत्थमुक्तप्रकारेणविरहवपुषः तस्मात्सकाशात्सर्वेतत्वजातंनष्टंएवंतत्वाभावेपिसति

पुनरपिप्रलपति हारोनारोपितःकंठेमयाविश्लेषभीरुणा इदानीमंतरेजाताः पर्वताःसरितोद्रुमाः २५ चंद्र
श्चंडकरायतेमृदुगतिर्वातोपिवज्रायतेमाल्यंसूचिकुलायतेमलयजोलेपःस्फुलिंगायते रात्रिः कल्पशतायते
विधिवशात्प्राणोपिभारायतेहाहंतप्रमदावियोगसमयः संहारकालायते २६

रामचंद्रोजीवति यतः कुलिशकठिनः वज्रवत् कठिनत्हृदयः एतत्किमित्याश्चर्यं एतेनप्रारब्धावश्यभोगत्वंदर्शितं तत्वनिर्गमप्रकारमाह अभिनवंस्व
सहचरं मांसंनष्टमभूत् अविरलबाष्पपातादपांबिंदवोपिनष्टाः आकाशः कांतापहरणंवशात् तेजोनष्टं तेजोनाशः श्वासदैर्घ्याद्वायवोनष्टाः त
न्मयत्वात्सीतागतांतरत्वात् शून्यंआकाशनाशः उक्तंचसिद्धांतमुक्तावल्याम् तस्मिन्यत्कठिनत्वंसाभूः तज्जलंयद्रवात्मकम् तेजोभवेद्यदुष्णं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निदरं दलितानि फुल्लानि ललितानि यानि बकुलमुकुलानि तेषु रवैलंत्योयाः कोकिलकुलविलासिन्यस्तासां कोमलालापेन निखिलानि पूर्णानि वृक्षसशि
खराणि तेषु मयूरनर्तनलीलासमूहस्तस्य सानुकूलनर्तनोत्साहहेतवो इतरस्तत श्वलंतश्च कोरास्तेषां चक्रेण युक्तं यथास्यात्तथा गुंजंत्योयाः वृक्षस्याः प

गगनचुंबनबद्धलक्ष्यविपुलफलभारावलंबनालंबितानंतजंतुसंतोषपोषनिर्दोषभूषणाध्युषितनिःशेषसविशेषामृत
वर्षस्पर्धिवर्द्धिष्णुरसरसालप्रियालहिंतालतमालकृतमालविशालशाल्मलमालूरशल्लकीशिरिषासनशमीशाकशिंश
पाशोकचंपककरूरदारकोविदारकर्णिकारसिंदुवारबहुसारनिंबजंबूदुंबरकदंबकरंजसोभांजनबकुलनिचुलकरुरव॰
जूरबीजपूरजंबीरभांडारवानीरकाश्मीरनारंगकर्मरंगकदलीचंदनालिंगितालवल्लीधात्रीवटकुटजपाटलांकोलकंको॰
लचोलभल्लातकबिभीतकहरीतक्यांम्रातककेतककंकतवेकंकतमधूकबंधूकजयंतीजपाश्वत्थकपित्थतिंतिणीना
गकेसरादिदुस्तरामरण्यानींपर्यटन् महावराहस्कंधारूढमुत्कटंररंतंकरटंवामतोविलोक्य २९

क्षिण्यरूपासांपक्षस्य आत्मगर्वस्य वृद्धिर्यस्यां तामटवीमटन्नित्यग्रिमेणान्वयः २८ पुनरपि अटवीमेव वर्णयति पुनः किंविशिष्टामटवींगगनचुं
बने आकाशावलोकने बद्धंलक्ष्यं यैस्तेउन्नत वृक्षाः तेषांयेविपुलाः फलभारास्तएवालंबनंतत्रावलंबिताः ये अनंताः जंतवः तेषांसंतोषपोषएवनिर्दोष



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भूषणं येषां तेष्वध्युषितः स्थितो योनिः शेषः पूर्णः सविशेषो विविधस्वादुः अमृतवर्षस्पर्धी अमृतादपि रमणीयः वर्धिष्णुः प्रतिदिनं वर्धमानो योरः
सस्तद्युक्ताः ये रसालादयः स्तैर्दुस्तरां राजादनं प्रजालः स्यादित्यमरः हिंतालो हिंगोटकः कृतमालः कर्णाचलः मालूरो बिल्वः कोविदारश्चमरिकः सिंदु
वारः बहुसारः सप्तपर्णः सोभांजनं शिग्रुतीक्ष्णगंधकाक्षीरमोचका इत्यमरः निचुलो हिज्जुलो ंबुजः मंजिष्ठा रोमरंगो स्त्री कर्मरंगो गरुः पुमान् इति धराणिः
अम्लातको म्लवेतः वैकंकतः कंकतिकः उत्कटं यथा स्यात्तथा रटंतं करटं काकं वामतः वामभागे काके तु करटारिष्टेत्यादि २९ रामः सविस्मयं यथा स्यात्तथा दक्षि-

दक्षिणतस्तु दक्षिणाचलप्रचलितमलयमालतीमरुबकलवंगकंकोलदमनकजातीतगरशतपत्रादिकमलमुकुलकु
मुदिनीकल्हारपरिमलमिलितचुंबिततामपर्णीकावेरीतुंगभद्रासांद्रगंभीरनीरधारातरंगपरिपीतमैत्रावरुणतरु
णीलंकाशशांकरुद्रपादाद्रिसरलसिंहलसालकश्रीगोपालकांपांड्यमंडलगिरिप्रवालचोलकुंतलकेरलपुन्नाटकक

णभोगे खंजनमवलोक्य सानंदं यथा स्यात्तथा अभवदिति शोकभंजनं काकदर्शनाशुभहरं च पुनः वामेनाक्ष्णा काकं दृष्ट्वा सबाष्पं सकरुणं च यथा स्यात्त
थासीदित्यन्वयः कीदृशं खंजनं एवंभूतसर्पफणामणौ क्रीडंतं दक्षिणाचलेभ्यः प्रचलिताः प्रसारिताः ये मलयसंबंधिनो मालत्यादयः तेषां यः परिमलो
तस्य मीलनमेकीभावः तेन चुंबिता युक्ताः याः कावेर्यादिनद्यस्तासां सांद्राः गभीराश्च या नीरधारास्तासां तरंगैः परिपीता मैत्रावरुणस्यागस्त्यस्य तरुणी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कांता साच लंका पर्यंत देश विशेषाणां कामिन्यश्च तासां नीरंध्रपीनस्तनादि भारांतरालेषु अधिष्ठितोयः श्रीखंडादि संभूतयक्ष कर्दमः तेन विमर्दः संमर्दः त
स्माद्विवर्द्धितो यो विविध गंधश्चासौ कुसुमानां बहु परिमलश्चतयोः समुद्गारी प्रक्षेपकोयः मारुत एवाशनं भोजनं यस्य सचासौ उत्थितः अर्धोदयश्चासौ-

र्णाटक करहाट विदग्धांध्र कामिनी नीरंध्र पीनस्तन वदन घनज घनदोर्मूल धम्मिल्ल भारांतराधिष्ठित श्रीखंडागरु कर्पूर मृगम
द कुंकुम स्तोम संभूत यक्ष कर्दम विमर्द वर्धित विविध गंध कुसुम बहुल परिमलोद्गारि मारुताशनोत्थित क्षीर नीहार काश्मीर स्फ
टिक शंख शंख कर्पूर कुंदावदात महाभुजंग स्फीत फूत्कार प्रफुल्ल फणामणौ क्रीडंतं शोकभंजनं खंजनं चावलोक्य वामेनाक्ष्णा सक
रुणं सबाष्पं च दक्षिणे न सविस्मयं सानंदमभवदिति ३० काकः कपोलस्थलसंस्थितो मे कोलस्य वामे व्यसनं सदौस्थ्यम् राज्यं भु
जंगस्य फणाधिरूढो व्यनक्त्यहो दक्षिण खंजरीटः ३१ क्षणं विचिंत्य विश्राम्य च सबाष्पम् भो भो भुजंग तरु पल्लव लोलजिह्व बं
धूक पुष्पवर शोभित पुष्कराक्ष पृच्छामि ते पवन भोजन कोमलांगी काचित्त्वया शरदचंद्रमुखी न दृष्टा ३२ क्षीर नीहार काश्मीर स्फटिक शंख

शंख कर्पूर कुंदावदातः श्वेतोज्वलश्चासौ महाभुजंगश्च तस्य स्फीताः ये फूत्काराः तैः प्रफुल्लायाः फणा तस्याः मणौ शिखरे क्रीडंतम् ३० कोलस्य वराहस्य कपोल
स्थलसंस्थितः स्कंधमवलंबितः सदौस्थ्यं समनोनवस्थानं अहो एतदाश्चर्यमेकदेवार्थ द्वय सूचक शकुनत्वात् दुःस्थितस्य भावो दौःस्थ्यं तेन सह वर्तमानम् ३१ ३२



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

३३ ममाभ्युदयोज्ञातएवउपस्थितराज्यभंगात् तर्हिदुःखंभवतुतत्राह अतःसीतावियोगादपि अधिकंव्यसनंकिमास्तेनकिमपीतिममतुमरणमेवशरणंचे
त्पुनः राज्यंस्यात्तर्हिलक्ष्मणेअस्तुतद्व्यसनंलक्ष्मणेमास्तु ३४ वामंअशुभसूचकंकाकंदक्षिणंशुभसूचकं खंजरीटंमहारण्यमरण्यानीत्यमरः ततोवनांतरेभ्र
मन् किष्किंधामाधिश्रित्य ३५ किष्किंधागुहानयुक्तोद्रिः किष्किंधाद्रिः तत्ररौद्ररसाश्रयोरौद्रः एतादृशोयोरुद्रः तदवतारम् भोमारुतेकेनचित्पापेनसी

भुजंगमःस्रग्वाणींकथयति गतागताचंपकपुष्पवर्णापीनस्तनीकुंकुमचर्चितांगी आकाशगंगेवस्रशीतलांगीनक्षत्रमध्ये
इवचंद्ररेखा ३३ रामः व्यसनंकिमतोप्यास्तेज्ञातश्चाभ्युदयोमम शरणंमरणंराज्यंमापुनर्लक्ष्मणेस्तुतत् ३४ ततोवामंतिर
स्कृत्यपुरस्कृत्यचदक्षिणम् धन्योवन्यशरण्यांतामरण्यानींस्मगाहते ३५ किंच किष्किंधाद्रौरौद्ररुद्रावतारंदृष्ट्वारामो-
मारुतिंवाचमूचे सीतानीताकेनचित्क्वापिदृष्टात्वष्टःकष्टंसंहरन्प्राहवीरः ३६ पापेनाकृष्यमाणारजनिचरवरेणांबरेणात्र
जंतीकिष्किंधाद्रौमुमोचप्रचुरमणिगणैर्भूषणान्यर्चितानि हेरामप्राणनाथेत्यहहजहिरिपुंलक्ष्मणेनालपंतीयानीमानीति
तानिक्षिपतिरघुपुरःकापिरामांजनेयः ३७

तानीतात्वताएतच्छ्रुत्वात्वष्टः यातरोषः हनूमान् रामंकष्टंसंपरिहरन्नाह ३६ पापेनेति किष्किं
धाद्रौ आंजनेयो हनूमानिति तान्याभरणानिरघुपतिपुरः चिक्षेपतानिकानीत्याह अंबरेण आकाशमार्गेण आकृष्यमाणा पिरामायानिकिष्किंधाद्रौ

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ह॰ ना॰ ४१

मुमोच ३७ अन्यथासंदेहं तत्वतः सीतायाः संतितिवेति ३८ ३९ तावन्मात्रांतरासहत्वात् नार्पितः कीदृशो हारः मुक्तार्थं मौक्तिकार्थं यः सूत्रगुणो दोरकः तद्युक्ताः येवेधकाः छिद्राणि तत्र विशृंखला सारत्वराशिः समूहो यस्य सः अतएव दुःखपंक्तिभेदफलेन दारुणं इति रुरोदेत्यर्थः ४० पुनरपि स्वजीवने

रामः सकरुणं सबाष्पम् जानक्याएवजानामिभूषणानीतिनान्यथा वत्सलक्ष्मणजानीषेपश्यत्वमपितत्वतः ३८ लक्ष्मणः सबाष्पम् कुंडलेनैवजानामिनैवजानामिकंकणे नूपुरावेवजानामिनित्यंपादाभिवंदनात् ३९ रामः आभरणानिहृदयेविन्यस्यगाढमालिंग्य सर्वेषुसत्स्वपितवाभरणेषुहारोनारोपितोत्हृदि चिरंहृदयंगतोपि मुक्तार्थसूत्रगुणवेधविशृंखलराशिस्तत्पंक्तिभेदफलदारुणमित्यरोदीत् ४० अहहजनकपुत्रीवक्त्रमुद्रामपश्यन्व्रजतिपरमहंसोनाक्षमोवापिगंतुम् तदुरुविरहवह्निज्वालयादग्धदेहः किमुतपवनसूनोभूषणैस्तंभितोसि ४१

पि विचिकित्सति अहहेति स्वदेहे पवनसूनो मे मम परमहंसः परमात्माजीवएव हंसः एतद्देहं विहाय न व्रजति तत्किंगमने हेतुमाह जनकपुत्रीति सोंततः त्वद्दत्तभूषणैस्तंभितः उत अथवा गंतुमक्षमः तत्र हेतुमाह तदुरुविरहेति ४१ ५ ५ ५ ५ ५ ५

अंक ५

४१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तमपि विश्वजयिनं सलोकं लंकावासिराक्षससहितम् कपिपतेः सुग्रीवस्य रावणस्तु हनिष्यत एव अथवा तावत्त्वं सुग्रीवस्यावतरणं अवतीर्यते यस्मि
न्नित्यवतरणं वासस्थानं गिरिं पादविन्यासलक्ष्मीनिक्षेपात् सार्थं विधेहीति कीदृशं गिरिं दर्शनात्त्वदवलोकनादेव निरस्त शत्रुपक्षम् ४२ रामेणस

हनुमान्सानुनयम् श्रीरामक्षोणिपालस्त्यजनिजदयिताशोकमेकः सलोकं लंकेशं जेतुमीशो तमपि कपिपतेराज्ञया
हं हनूमान् सुग्रीवस्याद्य सार्द्धं गिरिमवतरणं पादविन्यासलक्ष्मीनिक्षेपादुत्सलाक्ष क्षपितरिपुबलं दर्शनं त्वं च देहि ४२
ततो हनूमान्सह लक्ष्मणेन रामेण सुग्रीवपुरस्थितोभूत् सुग्रीवः तान्तत्र साक्षात्कपियूथनाथः पापानि दग्धुं दहनानद द
र्श ४३ श्रुत्वा रामस्य कांताहरणमनिलजस्याननाद्वानरेंद्रो निश्वस्यात्मीयमस्यानुवदति पुरतस्तद्बलाद्वालिनोपि हानाथे-
विद्यमाने किमिति रघुपतिस्तं निहंतुं प्रतिज्ञामारूढः प्रौढरोषानलबहलकलालंकृतोधिज्यधन्वा ४४

हकीदृशेण रामेण सहलक्ष्मणे
न लक्ष्मणसहितेनेत्यर्थः तान् हनुमद्रामलक्ष्मणान् दहनान् दक्षिणाग्निगार्हपत्याहवनीयान् ४३ श्रुत्वेति वानरेंद्रः सुग्रीवः अस्य रामस्य पुरतोग्रे बलादे
व वालिनः सकाशात्तत्प्रसिद्धमात्मीयजायाहरणश्रवणं लक्षीकृत्य वदति रघुपतिः तं वालिनं इति किं कांतापहरणदुःखानुभवज्ञत्वात् अन्यत्सुगमम् ४४

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नत्वेति ससंभ्रमंसादरंविस्मृतंचिरंवियोगात् तत्प्रियाया आलिंगनेकृतप्रतिज्ञेरामेद्रुतभाविनीषुसीम्रभाविनीषु अन्यत्सुगमम् ४५ येचत्वारोराम
भरतलक्ष्मणशत्रुघ्नाख्याः राजपुत्राः दशरथसुताः जज्ञिरेतेषांचतुर्णांमध्येरामः तारकेवकालरात्रिः तस्याः प्रत्यूषोयंरामः तद्धंतायमित्यर्थः ननुस्त्रीवधा
त्सागाः किन्नेत्याह अमलइति अमलत्वेहेतुः सुचरितंपुण्यार्थचरितंतस्यकथा नानाविनोदपरिहारवाक्यैर्गुणकथासैवकंदलीतस्याः मूलस्यापिकंदः

सुग्रीवः नत्वाससंभ्रममथोजगदेकवीरमालिंगयन्रघुपतिंशुशुभेकपींद्रः तद्विस्मृतंपुनरिवाभ्यसतेप्रियायाः कंद
र्पकेलिषुपुनर्द्रुतभाविनीषु ४५ अयंमरुत्तनयकोसौचतुर्णांनाटकांतकः मारुतिः येचत्वारोदिनकरकुलक्षत्रसंतान
वल्लीमालाम्लानस्तबकमधुपाजज्ञिरेराजपुत्राः रामस्तेषामभवदमलस्ताटकाकालरात्रिःप्रत्यूषोयंसुचरितकथाकं
दलीमूलकंदः ४६

प्रसरणशीलानिमूलानितन्निदानमध्योग्रंथिः कंदः यथा छिन्नापिकदलीउत्पद्यते एवमाच्छिन्नोपिधर्मः यतःपु
नः पुनरुत्पद्यतेसर्वेकीदृशा इत्यपेक्षायामाह दिनंकरोतीतिदिनकरस्तस्यकुलेजातानांक्षत्रियाणांसंतानएववल्लीतस्यामालापरंपरातस्याः अम्लानाः
स्तबकाः पुष्पगुच्छाः तेषांमधुपाः रविवंशक्षत्रिययशोवंतंसमधुपाइत्यर्थः ४६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अजेयानां हननकर्तृत्वान्महतीमित्युक्तं तालांस्तालवृक्षांतर्गतदैत्यानेव सौमित्रिः अंघ्रेर्भारेणचरणांगुष्ठाविष्कृतभूभारेण सरलानकृत अत्र हेतुः शेषपृष्ठस्था
निमूलानि येषां ते तान् एतेनैवमुक्तं भवति कुंडलीभूतदेहशेषपृष्ठत्वमूलत्वात् तेपि प्रकृतिकुटिला इति कार्यं निदानाद्धि गुणान्विधत्ते इत्युक्तत्वात् चरणभा

ततस्ततः श्रुत्वावालीनदनुमहतीं राघवस्य प्रतिज्ञां तालान्सप्त प्रकृतिकुटिलान्प्रेरयामास योद्धुम् सौमित्रिस्तानकृत
सरलांश्छेषपृष्ठस्थमूलान्भारेणांघ्रेरथ रघुपतिः संदधे दिव्यमस्त्रम् ४७ लक्ष्मणः साशंकं रामं प्रति दैवज्ञात्वा बाणः
प्रहंतव्यः यतः एकदैवशरेणैकेनैव भिन्नकलेवराः म्रीयंते सप्त तालास्ते घ्नंति हंतारमन्यथा ४८ रामः सावज्ञम्
माभैषीर्मयि सौमित्रे राघवे धिज्यधन्वनि सतां देहं परित्यज्य निर्जगामास तां भयम् ४९ रामः करेण बाणमालभ्य
भावोस्ति चेत्कुशिकनंदनपादयोर्मे यद्यस्म्यहं द्विजतिरस्कृतरोषहीनः नान्यंगनासु च मनः शरसप्ततालान्भित्वा
तदा प्रविशभूतलमप्यगाधम् ५०

रेणशेषशिरः समाक्रमणात् सरलतया वृक्षा अपि स
रला जाता इति सूचितम् शेषं सुगमम् ४७ अन्यथा एकदैव सप्तानामपि हननाभावे तत्रापि एकेनैव बाणेन एकेन ४८ भयं सतां देहं त्यक्त्वा सतां देहं निर्ज-
गामेति अतः परदारहरणत्वात् वाली अरांस्तत्र भयमिति भावः ४९ द्विजैः कृतायामे तिरस्कृतिस्तया यो रोषः तेन हीनः यद्वा द्विजानां तिरस्कृतिस्तेषु रोषश्च्युत
द्वहितः ५०

नत्वेति ससंभ्रमंसादरंविस्मृतंचिरंवियोगात् तत्प्रियायाआलिंगनेकृतप्रतिज्ञेरामेद्रुतभाविनीषुसीप्रभाविनीषु अन्यत्सुगमम् ४५ येचत्वारोराम
भरतलक्ष्मणशत्रुघ्नाख्याः राजपुत्राः दशरथसुताः जज्ञिरेतेषांचतुर्णांमध्येरामः ताटकैवकालरात्रिः तस्याः प्रत्यूषोयंरामः तद्धंतायमित्यर्थः ननुस्त्रीवधा
त्सागाः किन्नेत्याह अमलइति अमलत्वेहेतुः सुचरितंपुण्यार्थचरितंतस्यकथानानाविनोदपरिहारवाक्यैर्गुणकथासैवकंदलीतस्याः मूलस्यापिकंदः

सुग्रीवः नत्वाससंभ्रममथोजगदेकवीरमालिंगयन्रघुपतिंशुशुभेकपींद्रः तद्विस्मृतंपुनरिवाभ्यसतेप्रियायाःकंद
र्पकेलिषुपुनर्द्रुतभाविनीषु ४५ अयंमरुत्तनयकोसौचतुर्णांनाटकांतकः मारुतिः येचत्वारोदिनकरकुलक्षत्रसंतान
वल्लीमालाम्लानस्तबकमधुपाजज्ञिरेराजपुत्राः रामस्तेषामभवदमलस्ताटकाकालरात्रिःप्रत्यूषोयंसुचरितकथाकं
दलीमूलकंदः ४६

प्रसरणशीलानिमूलानितन्निदानमध्योग्रंथिःकंदः यथा छिन्नापिकदलीउत्पद्यते एवमाच्छिन्नोपिधर्मः यतःपु
नः पुनरुत्पद्यतेसर्वेकीदृशा इत्यपेक्षायामाह दिनंकरोतीतिदिनकरस्तस्यकुलेजातानांक्षत्रियाणांसंतानएववल्लीतस्यामालापरंपरातस्याः अम्लानाः
स्तबकाः पुष्पगुच्छाः तेषांमधुपाः रविवंशक्षत्रिययशोवंतंसमधुपाइत्यर्थः ४६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अजेयानां हननकर्तृत्वान्महतीमित्युक्तं तालांस्तालवृक्षांतर्गतदैत्यानेव सौमित्रिः अंघ्रेर्भारेणचरणांगुष्ठाविष्कृतभूभारेण सरलानकृत अत्र हेतुः शेषपृष्ठस्था
निमूलानियेषांतेतान् एतेनैवमुक्तंभवति कुंडलीभूतदेहशेषपृष्ठत्वमूलत्वात् तेपिप्रकृतिकुटिला इति कार्यं निदानाद्धिगुणं विधत्ते इत्युक्तत्वात् चरणभा

ततस्ततः श्रुत्वावालीनदनुमहतींराघवस्यप्रतिज्ञांतालान्सप्तप्रकृतिकुटिलान्प्रेरयामास योद्धुम् सौमित्रिस्तानकृत
सरलांञ्छेषपृष्ठस्थमूलान् भारेणांघ्रेरथरघुपतिः संदधेदिव्यमस्त्रम् ४७ लक्ष्मणः साशंकंरामंप्रतिदेवज्ञात्वाबाणः
प्रहंतव्यः यतः एकदैवशरेणैकेनैवाभिन्नकलेवराः म्रीयंतेसप्ततालास्तेघ्नंतिहंतारमन्यथा ४८ रामः सावज्ञम्
माभैषीर्मयिसौमित्रेराघवेधिज्यधन्वनि सतांदेहंपरित्यज्यनिर्जगामासतांभयम् ४९ रामः करेणबाणमालभ्य
भावोस्तिचेत्कुशिकनंदनपादयोर्मेयद्यस्म्यहंद्विजतिरस्कृतरोषहीनः नान्यंगनास्पृक्चमनः शरसप्ततालान्भित्वा
तदाप्रविशभूतलमप्यगाधम् ५०

रेणशेषशिरः समाक्रमणात् सरलतयावृक्षा अपिस
रला जाता इतिसूचितम् शेषंस्पृगमम् ४७ अन्यथाएकदैवसप्तानामपि हननाभावेतत्रापि एकेनैव बाणेन एकेन ४८ भयंसतांदेहंत्यक्त्वासतांदेहंनिर्ज-
गामेति अतः परदारहरणत्वात् वालीअसंस्तत्र भयमितिभावः ४९ द्विजैः कृतायामेतिरस्कृतिस्तयायोरोषः तेनहीनः यद्वाद्विजानांतिरस्कृतिस्तेषु रोषश्च्युत
द्रहितः ५०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्रुगमम् एते भयभृतः आसन्नित्यन्वयः तानाह अश्वा रवेः सप्तगाः सप्त द्वीपाः गकारो गगनद्वीपगणेषु च गणोपि चेति संसारावर्त शब्दशासनः ५१ रामकराद्विमुक्तो
बाणः पुंखावशेषः सन् इति पक्षान्वि धुनोति कंपयतीति किं भुजंगमः शेषस्तद्भंगभयेन अंबरचरं ब्रह्माणं बोधयन्निव ५२ विनापराधं हननमेव पापं तद्यु-



एकेनैव शरेण बालकदलीकांडप्रभंगक्रमात्कृत्तेषु प्रथमेषु दाशरथिना तालेषु सप्तस्वथ अश्वाः सप्त जगंति सप्त
मुनयः सप्ताब्धयः सप्तगाः सत्यं सप्त च मातरो भयभृतः संख्यानसाम्यादिह ५१ रामबाणः सक्षोभम् बाणः प्रमा
णमधिगम्य वसुंधरायाः संबोधयन्निव भुजंगमभंगभीत्या ब्रह्माणमंबरचरान्वि धुनोति पक्षान्पुंखावशेष इति-
रामकराद्विमुक्तः ५२ पौरंदरिः सक्रोधम् श्रुत्वा हतान्समरमूर्धनि सप्ततालान् रामेण पापत्दृदयेन विनापराध
म् कोपानलज्वलितत्दृत्कमलोथ वाली रंगावतारमगमाद्गिरिचत्वरेषु ५३ तारा सहर्षम् अवश्यं भगवतः श्री
पुरुषोत्तमस्य रामचंद्रस्य प्रसादादद्य चिरविरहिणः प्राणवल्लभस्य सुग्रीवस्य वक्षः पीठे लुठिष्यामीति मन्य-
माना गिरिवरशिखरमारुह्य राम पौरंदरि समरमाकांक्षती चिंतयामास



क्त त्दृदयेन परकांतापहरणत्वं वानराणामभेदत्वात् यद्वा पापो स्त्री क्रोधपंकयोरिति विश्वात् क्रोधयुक्तत्दृदयेनेत्यर्थः ५३ ५ ५ ५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तारेति चिंतयामासेति पूर्वेणान्वयः इतिकिं अस्यवालिनः प्राणान् हरतु कलिकलाकलेशंशः पापंतेनराजमानस्यकिलेति पाठेवानरजात्यनुकरणः किलश
ब्दः कीदृशीतारास्त्रस्तःधम्मिल्लोकेशबंधनम् यस्याः नरोरामस्तस्यैषानारारामस्यबाणधारेत्यर्थः ५४ हेवत्स एषः वालीकेनायुधेनयोद्धव्यः यद्वाकेन

तारासंत्यक्तहारागिरिशिखरचरास्त्रस्तधम्मिल्लभाराशोकाब्धिप्राप्तपारार्पितमदनशरावीरसुग्रीवदाराः नाराना
राचधारानिजरमणरतातापिनः पापिनोस्यप्राणांस्त्राणावतीर्णाहरतुकलिकलाशालिनोवालिनोद्य ५४ रामःस
क्षोभंपौरंदरिम् गिरिगिरिमगंभीरमहिमानमवलोक्यसौमित्रिमित्रमनुस्मृत्याब्रवीत् वत्स किंवालीवान
रालीबहलकलकलाहूतदेवेंद्रवज्रंवांछत्याकृष्ययोद्धुंशिवशिवतुमुलोत्कालसंचालितार्कः

वीरेणयोद्धव्यः नकेनापीतिध्वनिः एषःकः वानरपंक्तीनांबहलोयोकलकलः शब्दः तेनचाहूतोदेवेंद्रस्तस्यवज्रमाकृष्यआदाययोद्धुंवांछति शि
वशिवेतिखेदेकीदृगयंतुमुलोन्यैरलक्ष्यः उत्कालः कदनंतेनसंचालितोर्कोयेन किंभूतंवज्रं प्रकर्षेणोद्यंतीयालांगूलवल्लीतस्याः शिखरेणाग्रभागे
नकवलितंगृहीतं किंभूतोवालीचंडःअजेयः दोर्दंडोभुजदंडस्तस्मिन्यः कोदंडोबाणः तेनभ्रांतोगर्वितः दोर्दंडस्यबाणेनजातगर्वइति गर्वसं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शयो भ्रमइतिविग्रहः मूलंचाग्रंशिखरंच मूलाग्रेताभ्यांयुतः शैलः मूलाग्रशैलस्तेन यत्प्रहरणंतत्रनिपुणः ५५ हेबाण पुराद्विजगणेन वेदोद्भवैर्मंत्रैः गु



प्रोद्यल्लांगूलवल्लीशिखरकवलितंचंडदोर्दंडकांडंभ्रांतामूलाग्रशैलप्रहरणनिपुणः केनयोद्धव्य एषः ५५ रामः सावष्टंभंनारायणंबाणमादाय वेदोद्भवैर्द्विजगणेनपुराभिषिक्तोमूर्धासिसमंत्रमपिबाणगुणेनमंत्रैः तत्तेजसापरवधूजनहारिणस्त्वंप्राणान्गृहाणसमरेष्वतिदारुणस्य ५६ रामबाणः पौरंदरिश्वब्रह्मतेजोधिगम्यपरदारापहरणपराभवंच अथरघुपतिबाणः प्राप्तवीरः प्रमाणः प्रलयदहनरोचिः कोटिविद्युन्मरीचिः अकृतत्हृदयभेदंवालिनः सोप्यरोदीदनिहतपितृशत्रुः किंसशल्योहतोस्मि ५७

णेनसमंत्वंमूर्धाभिषिक्तोसि अतस्तत्तेजसातेषांमंत्राणांतेजसारूगमम् ५६ अथेति प्राप्तवीरस्यवालिनः प्रकर्षेणमानमियत्तायेनसः ननिहतः पितुरिंद्रस्यशत्रुः रावणोयेनसः अतएवसशल्योरावणहननमेवशल्यम् ५७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भोकपयः रावणापत्यंमेघनादः शरस्त्रोघप्रसरेणशस्त्रघातांडंबरेणआखंडलमिंद्रंदुर्यशोभागिनंचक्रेरावाणिनाशक्रोजितइतिदुर्यशः हेवीरतत् इंद्रगतंदु
र्यशोत्वयासंमृष्टंउज्वलीकृतम् दूरीकृतमितिभावः कथंदूरीकृतमित्यपेक्षायामाह किंभूतेनत्वयारावणंमेघनादपितरंकक्षैवगर्त्तस्तत्रकुलीरतांकर्कटतांग
मयता कीदृशमिंद्रम् गौतमशापेनयंत्रितः बद्धःभुजस्थेमाभुजबलंयस्यतंप्राणस्थेमातरः पराक्रमद्युम्नानिशौर्योजसीतिहैमः ननुतातदुर्यशः संमृष्टं

रामः सकरुणंसविषादंचवत्ससौमित्रेगिरिगह्वरेषुस्वयोनिविहितंमहत्कष्टमनुभवंतंमहावीरंअनपराधिनंवालिनंह
त्वामंदभाग्यः कथमहंजानकीसुखमनुभवष्यामीतिशिरोधुन्वन्पौरंदरिंव्याजहार शरस्त्रोघप्रसरेणरावणिरसौयोदुर्यशो
भागिनंचक्रेगौतमशापयंत्रितभुजस्थेमानमाखंडलम् कक्षागर्तकुलीरतांगमयतावीरत्वयारावणंतत्संमृष्टमहौविश
ल्यकरणीजागर्तिसत्सुत्रता ५८ वालीप्राणांस्त्यक्तुमिच्छन् सुग्रीवोपिक्षमः कर्तुंयत्कार्यंतवराघवकिमहंनक्षमः क
स्मादपराधंविनाहतः ५९

ममतुरावणहननरूपं शल्यमस्त्येवेतिचेन्न असौसत्सुत्रभाववानंगदः जागर्तिजीवत्येवकीदृशीविश
ल्यंकर्तुंशीलंयस्याः सा अयमंगदोरावणंमत्सहायतयाहनिष्यतिएतेनत्वंविशल्योभवेतिभावः रावणपुत्रेणत्रासितेंद्रोबद्धः इंद्रपुत्रेणत्वयारावणोब
द्धः एतेनसादृश्यंजातंपरंतुत्वत्कृतेनरावणहननात्तवातिशयइतिभावः ५८ ७ ७ ७ ७ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हे पुरंदरनंदन चेत् यदि त्वं मां आहनिष्यसि तदा मम शुद्धिः मनःप्रसत्तिर्भविष्यति अस्मात्त्वद्धननापराधात् पुनर्जनकजाविरहो मास्तु शयानं अंतर्निष्ठ
त्वात् मीलिताक्षम् ६० ६१ ६२ आदौ राज्ये किष्किंधाद्रौ सुग्रीवं वानरराज्ये शंकां समुद्रं तीर्त्वा कथं यास्यामीति भयं त्यक्त्वा लंकां प्रतस्थौ तदनु प्रस्थान



रामः सबाष्पम् शुद्धिर्भविष्यति पुरंदरनंदन त्वं मामेव चेद् हहह पातकिनं शयानम् सौख्यार्थिनं निरपराधिनमाह
निष्यस्यस्मात्पुनर्जनकजाविरहोस्तु मा मे ६० पौरंदरिः तथेत्युक्त्वा पुनः स्वर्ग्यागतिस्तेन भविष्यति यावत्त्वां न हनि
ष्यामि स्थास्यसि त्वं यमालये ६१ इति प्राणान्मुमोच ह॰ दाशेरहो रघुपतिः परिभूयते किं वैवस्वतादपि
स्रुवासत दालयेपि योदेववाक्यमनतिक्रमयन् कियंतं कालं निहत्य पुरुहूतसुतं तु देवः ६२ रामः कथंचिद्विषा
दं परित्यज्य पौरुषमवलंब्य राज्ये सुग्रीवमादौ सदयितमभिषिच्यांगदं यौवराज्ये रामः सेनाधिपत्ये सपवनत
नयान्वानरेंद्रान्प्रतस्थे लंकां संत्यज्य शंकां तदनु कपिभटैर्मात्यवत्युत्तमाद्रौ वर्षाकालं गमयितुमचिरान्मंत्रिभिः
संमतोभूत ६३

घोषानंतरं मंत्रिभिः कपिभटैः वर्षाकालं गमयितुं संमतः अभूत् वर्षाकालं गमयित्वा यास्यामि इ-
ति निश्चितवान् एतेन नीतिशास्त्रपराणां प्राधान्यं दर्शितम् ६३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

६४ ६५ प्रकर्षेणम्लानः अरुणः शोणत्वंयस्मिन् तंकलयापिसीतास्वरलेशेनापि अत्रसर्वमंगसादृश्यं एतेनगुणकीर्तनावस्थोक्ता सोक्तारसोदधौ
वैरह्कांता विषयकप्रसंशनंस्यात् गुणाख्यानमिति ६६ यदिंदीवरंत्वन्नेत्रसमानकांतितदपिसलिलेमग्नंयः तवमुखच्छायानुकारीसोपिशशीमेघै

रामात्परः शूरतरोनकश्चित्पराभवः स्त्रीहरणान्नचान्यः तथापिनाब्धिंप्रविवेशरामोवबंधसेतुंविजयासहिष्णुः ६४
अपिच रामाद्बलीयान्नपरोत्रकश्चिद्दारापहारान्नपरोभिमानः तथापिरामः शरदंप्रतीक्ष्यबध्वांबुधौसेतुमरिंजगाम ६५
रामस्तत्रजनकतनयाकमनीयतामनुस्मृत्य इंदुर्लिप्तइवांजनेनगलितादृष्टिर्मृगीणामिवप्रम्लानारुणमेवविद्रुमदलंश्या-
मेवहेमप्रभा पारुष्यंप्रलयाच्चकोकिलवधूकंठेष्विवप्रस्तुतंसीतायाः पुरतस्तुहंतशिखिनांबर्हाः सगर्हाइव ६६ रामः कादं
बिनीतांडवाडंबरंविलोक्य यत्त्वन्नेत्रसमानकांतिसलिलेमग्नंतदिंदीवरंमेघैरंतरितः प्रियेतवमुखच्छायानुकारीशशी
येपित्वद्गमनानुकारिगतयस्तेराजहंसागतास्त्वत्सादृश्यविनोदमात्रमपिमेदैवेननक्षम्यते ६७ इतिश्रीह॰ना॰वालिव-
धोनामपंचमोंऽकः ५ रंतरितः राजहंसाअपिगताः वर्षाकालेकमलाभावात् अन्यत्स्फुगमम् प्रलापावस्थेयं सोक्तारसोदधौकांताश्रि-
तकालाख्यव्यवहारः स्यात्प्रलापोयम् ६७ इतिश्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकटीकायां वालिवधोनामपंचमोंऽकः ५ ६ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ह॰ना॰
४६

स्थिरैर्योगिभिरपि किंसुतगृहिभिः भवतांमध्येकः आगंतुमर्हतीति १ २ हेस्वामिन्प्रभो अयंव्योमतरुः आकाशमेववृक्षः ममक्रमतले अस्ति पा

अंक॰
६

रामः वानरभटानाचष्टे भोभोस्सुग्रीवसैनिकाः शृणुत व्यसने महति प्राप्ते स्थिरैः स्थातुंनयुज्यते लंकांनिःशंकमालो
क्यकइहागंतुमर्हति १ हनूमान् सहर्षदोस्तंभास्फालनकेलिमभिनीयनिजप्रचंडदोर्दंडयोर्महतींप्रौढिंनाटय
ति देवपश्य अष्टांगुलमयःकायःपुच्छोमेद्वादशांगुलः बाहूमेपश्यभोनाथकथंरत्नाकरंतरे २ रामचंद्रः सविस्मयोब
भूवततोजांबवान् देवरुद्रावतारोयंमारुतिःरुद्रस्तुतिः क्रियतांरामचंद्रोरुद्रस्तुतिंकृत्वा भोभोमारुतेत्वयाविही
नः कः कर्तुंसमर्थोस्ति तत्रहनूमान् महावीराद्भुतपराक्रमः सहर्षंवाक्यंदेवाकर्ण्य कूर्मोमूलवदालवालवद्पांना
थोलतावद्दिशोमेघाः पल्लववत्प्रसूनपलवन्नक्षत्रसूर्येंदवः स्वामिन्व्योमतरुर्ममक्रमतलेश्रुत्वेतिगांमारुतेःसी
तान्वेषणमादिशन्दिशतुवोरामः सहर्षः श्रियम् ३

४६

दविन्यासोत्थापनात् नीचैरस्ति तमेववृक्षरूपत्वेननिरूपयति कूर्मोमूलवदिति ३ ६२ ६२ ६२ ६२ ६२ ६२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मूलस्थानीयं जंबूद्वीपंसागरांतर्वर्तिदेशम् इतः सकाशात् तत्रैवलंकासमीपएव आनयेप्रापयामि लंकापिजंबुद्वीपांतरालएवेत्युक्तार्थेवेपदम् एवंव्याक्रियते
जंबूयुक्तोद्वीपः मध्यमपदलोपीसमासः द्वीपशब्देनलक्षणा शेषोजंबूध्वजोद्वीपोपरोव्ययस्वराडितितंत्रे जंबूद्वीपलक्षणं शेषत्वात् स्वर्णाचलोमेरुः त्रिनेत्रा
चलः कैलासः विंध्यादीनांक्षेपेण प्रक्षेपणेन क्षुण्णंखंडितंविवर्त्तमानंप्रत्यागतंअवरुंधमानंसलिलंयस्यतंबध्नामिपर्वतैरेवस्थलीकरोमि ४ इत्युक्तोपिकिं-

देवाज्ञापयकिंकरोमिसहसालंकामिहैवानयेजंबूद्वीपमितोनयेकिमथवावारांनिधिंशोषये हेलोत्पाटितविंध्यमंदरगिरिस्वर्ण
त्रिनेत्राचलक्षेपक्षुण्णविवर्त्तमानसलिलंबध्नामिवारांनिधिं ४ अपिच देवाज्ञांदेहिराज्ञांत्वमसिकुलगुरुः शोषयेकिंपयोधिं-
किंवालंकांसलंकाधिपतिमुपनयेजानकींमानकीर्णाम् सेतुंबध्नामिमत्तः स्फुटितगिरितटीभूतभंगात्तरंगादुद्भ्राम्यन्नक्रचक्रोपि
चमकरकुलग्राहचीत्कारघोरम् ५

कारयामि इति विचिकित्समानः पुनरात्मबलमुक्तार्थानुवादेनैवस्मारयति देवाज्ञामितिद्वाभ्याम् अलंका
लंकैवानास्तीत्येवंचूर्णीकरोमीतिशेषः अथवामानकीर्णांपातिव्रत्योन्नतिमतींजानकीमुपनयेसेतुंबध्नामि किंभूतंसेतुंमत्तः सकाशात् स्फुटितायेगिरयः
तेषांतटीभिः भूतानांभंगोयत्रतस्मात्तरंगादुच्चैः भ्रमंतोयेनक्रास्तेषांचक्राणांसमूहानांक्रमादुत्फालामकरग्रहग्राहचीत्कारैश्चघोरंनक्राः सपक्षजातीयामक
राः स्युश्चतुष्पदाः एतद्भिलाग्रहग्राहास्तद्भिलाः समुदीरिताः इतिवैद्यकेयद्वा किंविशिष्टान्मत्तः स्फुटितायेगिरयस्तेषांतटीभिर्येभूतभंगाः प्राणिनाशास्तैरात्तः
स्वीकृतोरंगोयेनतस्मात् ५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सैन्येनसहसमुद्धृनंतत्रैवलंकायांसैन्येनसहसम्यगुन्द्धृतंसर्वंसंपादये व्यापादये हन्मि सकलं पर्वतादिकंस्फगममम् ६ रामः शीघ्रंरावणंहत्वा नेष्यतीति वचसा श्वास्य
तस्याः पुरतोमुद्रांविन्यस्यमयिजीवतीति ७ एतेझंझानिलाः झंझानामानोवायवः कदंबसंबंधिनारजोभरेणककुभोरुंधंत्याच्छादयंति किंभूताः दुरतिक्रमाः
दुर्लंध्याश्चतेक्रमणैवमिलंतएकीभवंतश्चते घूर्णोर्मयश्च घूर्मायमाणतरंगास्तैरेवलोकानांमर्माणि छिंदंति इति पुनः कीदृशा गाढाम्रेडनेनवा तातिशयमेल



अथ किंप्राकारविहारतोरणवतींलंकामिहैवानये किंवासैन्यसमुद्धृतंचसकलंतत्रैवसंपादये हेलांदोलितपर्वतोच्चशिखरैर्ब
ध्नामिवारांनिधिंदेवाज्ञापयकिंकरोमिसकलंदोर्दंडसाध्यंमम ६ रामः सत्वरंकरमुद्रांसमुत्धृत्यवीरमारुते सुद्रांसमुद्र
मुल्लंघ्यशीघ्रमाश्वास्यजानकीम् विन्यस्यपुरतस्तस्याआगच्छमयिजीवति ७ हनुमांस्तथेतिश्रीरामस्यश्रीवोंप्रणम्यसमा
दायमुद्रांसमुद्रोपकंठंपीठावतारमासाद्यसद्योऽचिंतयत् एतेनेदुरतिक्रमाः क्रममिलद्घूर्मोर्मिर्मर्मच्छिदः कादंबेनरजोभ
रेणककुभोरुंधंतिझंझानिलाः गाढाम्रेडनरूढनीरदघटासंघट्टनीलीभवद्व्योमास्फोटकटाहनिर्झरपयोवेणीकणग्राहिणः ८

नेनरूढाप्रवृद्धायानीरदघटातस्याः संघट्टनेनसंयोगेननीलीभवत् श्यामीभूतंयद्व्योमतस्मिन्स्फोटनंतद्युक्तश्चासौकटाहश्च कटाहोब्रह्माडकटाहः त
स्माद्यन्निर्झरत्पयः गंगातस्याः यावेणीप्रवाहस्तस्मादंबुकणान्ग्रहीतुंशीलंयेषांते आम्रेडनोतियोगोस्त्रीति विश्वः ८ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उद्यल्लांगूलेति अथदुरतिक्रमेण विचारानंतरंसहनूमान्जलनिधिंलंघयितुंजांघिकत्वमंगीचकारेत्यन्वयः जंघालोतिजवोजंघाकारिकोजांघिकोजवीतिच्चरकः
कः किमिव खगपतिर्गरुडः चंडोड्डीनमिव कीदृशंजलनिधिं विलसितांभस्तंभितः नेत्रप्रकाशोयेनतंजलचराणांमत्स्यादीनांखराः तीक्ष्णानिरंतराः योलेखा
क्रीडनं तत्रये अस्फाला उत्पातास्तैर्वाचालिताः मुखरीकृताः आशादिशायेनतम् ९ हनूमानितिशेषः सिंदूरपूरारुणंदिग्वारणानांकटितटमाभितः सर्वत

धैर्यमवलंब्यो द्यल्लांगूलास्फालकेलिव्याकुलीकृतांबरचरः सज्जोबभूव अथसविलसदंभः स्तंभिताक्षिप्रकाशंजलचरखर
ललेखास्फालवाचालिताशम् जलनिधिमधिवीरोल्लंघितुंजांघिकत्वंखगपतिरिवचंडोड्डीनमंगीचकार ९ लांगूलोत्ता
लकेतुर्नभसिपृथुगतिः स्फारसीमंतितांभ्रः स्फूर्जद्घोरोरुवेगोल्लुलितजलनिधिः पृष्ठकृष्टोग्रसत्वः दूरात्सिंदूरपूरारुण
मरुणरुचिः स्तेजसः संविभागैश्चक्रेदिग्वारणानांकटितटमभितः सूर्यविद्धांबुदाभम् १०

स्तेजसः संविभागैः स्वांगदीप्तिसंचारिणैः सूर्यविद्धांबुदाभंसूर्येणविद्धस्यालिंगितस्यांबुदस्येवाभायस्यतादृशंचक्रेयथालग्नरविकरामेघादृश्यंतेतथादूरा
देवलग्नांगदीप्तयः दिग्वारणा अभवन्नित्यर्थः सूर्यसादृश्ये हेतुमाह अरुणरुचिः वानरजातित्वात् यद्वा समुद्रोल्लंघनाविष्कृतरोषावेशाच्च अरुणारुचिर्यस्य
रोषमेवद्योतयति लांगुलमेवोत्तालः केतुर्यस्यनभसियापृथुगतिः शीघ्रगमनंतदर्थंयः स्फारउत्पतनंतेनसीमंतितानिद्विधाभूतानि अभ्राणियेनअभ्रंमेघो-

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वारिवाहस्तनयित्नुर्बलाहक इत्यमरः स्फूर्जत् निर्गच्छत् यः प्रौढो ऽतिबहुउरुवेगः जंघाजवस्तेनउल्ललितः जलनिधिर्येनसः पृष्टेना कृष्टानि उग्राणि राक्षसा-
दीनि सत्वानि येनसः ससुद्रलंघनेराक्षसयुद्धंप्रसिद्धम् १० मैनाकोगिरिः कपिंप्राह हंहोसंबोधनेव्ययं इहेहनुमन् त्वंदूरादागतः अतो मम शिखरे दूराध्व-
खेदंजहीत्यन्वयः तस्यगिरेरितिवाचंप्राप्यश्रुत्वाअंगुल्याचरणांगुल्या तदग्रंतच्छिखराग्रंस्पृष्ट्वा भुजरयपवनेनापूरिताआशाः येनैवंयथास्यात्तथाजगाम-

तत्रावसरेसमुद्रादुत्थितोमैनाकः विश्रांतस्तत्रहर्षात्सपदिजलधिनाप्रेरितोरत्ननाभो मैनाकः कांचनांगस्तुहिनगिरिस्कंतः मा
हदूरागतस्त्वम् हंहोदूराध्वखेदंजहिममशिखरेप्राप्यतस्येतिवाचं पृष्ट्वांगुल्यातदग्रंभुजरयपवनापूरिताशंजगाम ११ वेलात
टेशालतमालमालांविलोक्यमानः सहसांजनेयः उल्लोलयन्वालधिवल्लिमुच्चैः कल्लोलिनी वल्लभमुल्ललंघे १२

कीदृशोमैनाकः जलनिधिनासपदिहर्षात् मत्कर्तृसगरगोत्रापत्यरामसहायकृदयमितिप्रीत्याप्रेरितः ननुकुतस्तत्रगिरिरित्यपेक्षायामाह कीदृशो-
गिरिः विश्रांतःपक्षच्छिदोगोत्रभिदः भयात्निलीयस्थितः अन्यत्स्फुगमम् ११ आंजनेयः अंजनीपुत्रः हनुमान्सहसा अनायासेनकल्लोलिनीवल्लभं
समुद्रमुल्लंघेलंघितवान् वालधिः पुच्छंतदेववल्लीतामुल्लोलयन् उच्चैश्चालयन् १२ ७ ७ ७ ७ ७ ७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अल्पोभूत्वालंकांप्रविशेति रामाज्ञयाद्विदंशप्रमाणदेहः द्विदंशोवनमक्षिकेतिविश्वः मात्रयापरिमितदेहेनशिंशपाग्रात् अशोकाग्रादवतीर्णः समीरस्नः
शिंशपाशोकावितिनिघंटः १३ समुद्रादानप्रकारमाह अत्राप्युक्तिप्रत्युक्तिः हनुमान् मातःजानकि सीता॰ भवान्कः हनू॰ मृगःवानरः सीता॰ अत्रकेन संप्रेषि
तोसि हनू॰ रघूत्तमेनत्वद्दौत्येनत्वद्दौत्यनिमित्तं सीता॰ इदंहस्तेकिं ह॰ तन्मुद्रिका सीतेतेन तुभ्यंदत्ता तवैवदत्तेतिपरस्परमुक्त्वा सीलातांमुद्रिकांनिजकराद्

अथदशरथसूनोराज्ञयावायुपुत्रोरजनिचरपुरीमालोक्यभूत्वाद्विदंशः अकलितपरिमाणोमात्रयासत्रपत्रांक्षिपतिजनकजा
ग्रेशिंशपाग्रावतीर्णः १३ जानकींनमस्कृत्यमारुतिः मातर्जानकिकोभवानिहमृगःकेनात्रसंप्रेषित स्त्वद्दौत्येनराघूत्तमेनकिमि
दंहस्तेस्तितन्मुद्रिका दत्तातेनतवैवतांनिजकरादालभ्यचालिंग्यचप्रेम्णाश्रूणिसंसर्जसम्यगुदभूद्गात्रेषुरोमोद्गमः १४ ह-
नूमान् अविरलगलदश्रुपूर्णलोचनाभ्यामसौवर्णमंगुलीयकंमन्यमानांजानकींसंभावयामास हेभामिनि स्रुवर्णस्यसुवर्ण-
स्यसुवर्णस्यचमैथिलि प्रेषितंरामचंद्रेण सुवर्णस्यांगुलीयकम् १५

लभ्यगृहीत्वा आलिंग्यस्वहृदये विन्यस्यप्रेम्णाश्रूणिससर्जसम्य
क्स्पृष्टंयथास्यात्तथागात्रेषुरोमोद्गमोभूदिति १४ हेभामिनिभ्रमवति भामाक्रोधभ्रमकोपयोरितिचरकः इदंसुवर्णस्यहेम्नः अंगुलीयकंरामेण तवतु
भ्यंप्रेरितंप्रस्थापितम् किंभूतस्यसुवर्णस्यशोभनपीतारक्तरंगवतः पुनः किंभूतस्य सुवर्णस्यशोभनरामनामाक्षरवतः पुनःसुवर्णस्य दशमाषमात्रस्य
सुवर्णंदशमाषकमिति १५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मुद्रेति परपुरुषसंभाषणात्पातिव्रत्यभंगभयान्मुद्रिकामुपन्यस्य पृच्छति मुद्रेति रामः अस्यैमुद्रायैचिरंत्वद्विरहणकंकणपदंकंकणस्थानंदत्तवान् एतेन व्याधिर्दर्शितः उत्कंज्वरसोदधौ व्याधिस्मरवदेनयासमुत्थसंतापदोषकृतः कृशिमेतिस्मृगमम् १६ अत्रअंगुलीयकमणौ सादरं यथास्यात्तथा अतिव-



जानकी आशालेशमासाद्यक्षणमश्रूणिप्रमृज्य मुद्रेसंतिसलक्ष्मणाः कुशलिनः श्रीरामपादाः सुखंसंतिस्वामिनि माविधेहिविधुरंचेतोनयाचिंतया एनांव्याहरमैथिलाधिपसुतेनामांतरेणाधुनारामस्त्वद्विरहेणकंकणपदंत्वस्यैचिरं दत्तवान् १६ अत्रांगुलीयकमणौप्रतिबिंबमासीद्रामस्यसादरमतीवविलोकयंती मद्रूपएवकिमभून्ममवीक्षयेति मीमांसयाजनकराजसुतासुमोह १७

रामस्येतिकर्मणिषष्ठी रामंरामनामाक्षरंविलोकयं ती सीताप्रतिबिंबंआसीत् मणौप्रतिबिंबिताबभूवेत्यर्थः यद्वा अत्रभ्रमः अत्रमणौरामस्यप्रतिबिंबमासीत्तदस्तिनवेतिपरीक्षयाविलोकयंती स्वप्र- तिबिंबंतत्रसाहृष्ट्वाविचिकित्सतिमद्रूपइति रामोपिमच्चिंतयामद्रूपएवाभूत् किमितिमीमांसयाविचारेणसुमोह वैचिंत्यमाप १७ ६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हेतन्वंगिस्वभावादेवतनुतांगतः त्वद्वियोगाद्विशेषतइत्यन्वयः तन्वंगीतिवापाठः तनून्यंगानियस्यासौरामः स्वभावादेवत्वद्वियोगाद्विशेषतस्तनुतांगत
इतियोज्यं तन्वंगीइन्नंतः १८ चंद्रेति शंपाविद्युत् कारयेतिस्वार्थेणिच्कुर्वित्यर्थः तत्रगत्वायात्रांरामप्रस्थानंकारयेत्यर्थः १९ ननुसमुद्रांतरित-

कथंचिच्चेतनांप्राप्य अयेमरुत्तनयय द्यंगुलीयकमेवकंकणमभूत्स्वामिनोरामदेवस्यतर्हिकिमिवतनुतांगतः
हनूमान् स्वभावादेवतन्वंगित्वद्वियोगाद्विशेषतः प्रतिपत्पाठशीलस्याविद्येवतनुतांगतः १८ जानकी चंद्रो
यत्रदिनेशदीधितिसमः पद्मंस्फुलिंगोपमंकर्पूरः कुलिशोपमः शशिकलाशंपासमाभासते वायुर्वाडवव-
न्हिवन्मलयजोदावाग्निवत्सांप्रतंसंदेशंनयरामसन्निधिमितोयात्रांद्रुतोकारय १९ हनूमान् किंदूरमिंदु
मुखिरामशिलीमुखानांकिंदुर्गमर्गलभिदांहरियूथपानाम् देवंप्रसन्नमिवदेवितवाद्यसत्यंरक्षांसिकानि
कुपितस्यसलक्ष्मणस्य २०

रक्षोगृहमागताहं दूरस्थोरामइतिमीमांसमानांसंबोधयति अर्गलानिप्राकारादीनिभिंदंतीत्यर्गलभिदस्तेषांशेषंस्फुगसम् २०



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उद्धियउत्पाट्य तत्क्षतेरावणपुत्रं अक्षनामानं वनभंगंश्रुत्वायोद्धुमागतं तस्मिन् हनुमतियः कोपस्तेनारुणेलोचनेयस्यतेनेंद्रजयिनामेघनादेनकृत्वाप्राड्निष्फ
लत्वाद्विगर्हितेनविधिनाब्रह्मणाहेतुभूतेनब्रह्मणाब्रह्मास्त्रेणब्रह्मदत्तपाशेनबद्धः अत्रेयंकथापूर्वंब्रह्मणादत्तोब्रह्मपाशः एतेनत्वंकपिंबध्नीहीनिरुद्धाव
लत्वाद्विगर्हितेनविधिना... 



तारेहनुमतिपाशोनिष्फलोजातः ततोमेघनादेनब्रह्मणोगर्हाकृता ततश्च ब्रह्मणाप्रार्थितोहनूमान् स्वयंनिबद्धः विदग्धः ब्रह्मसंकटात्महननिवारणवि-

अत्रांतरेजानकीसप्रपंचंपृच्छन्हनूमान् मातःकुत्रास्तेराजवाटिकादर्शयतिजानकी रेपुत्रपश्चिमदिग्भागेनास्यास्तिवाटि
काहनूमान्उद्यल्लांगूलप्रचंडरूपेणप्रज्वलितः इत्युक्त्वारजनीचरस्यहनुमानुद्धिद्यलीलावनंवीरंततक्षतमक्षमात्तपरिघाघातेर्जघा
नागतम् तत्कोपारुणलोचनेंद्रजयिनाप्राड्निष्फलत्वात्धृतब्रह्मास्त्रेणविगर्हितेनविधिनाबद्धोविदग्धः कपिः २१ रावणः तमालो
क्य रेरेवानरकोभवानहमरेत्वत्सूनुहंताहवेदूतोहंखरखंडनस्यजगतांकोदंडदीक्षागुरोः मद्दोर्दंडकठोरताडनविधौकोवात्रिकूटाच
लःकोमेरुःक्वचरावणस्यगणनाकोटिस्तुकीटायते २२ धिङ्गः २१ रेरेवानरभवान्कः हेरावण अहंआहवेत्वत्सूनुहंताक्षघाती एतेनस्वतोबलं
उपदिश्यस्वामिनोप्यात्मनोबलंद्योतयति खरखंडनस्येत्युपलक्षणंखरदूषणत्रिशिरसांत्वद्भ्रातृणांखंडनस्यहंतुः रामस्यदूतः किंभूतस्यरामस्यजगतोविश्व
स्ययाकोदंडदीक्षाधनुर्विद्याशिक्षणंतस्यगुरोः शिक्षकस्यमद्दोर्दंडाभ्यांयत्कठोरताडनंतस्यविधौसतिमयिप्रहरतिसति त्रिकूटादयःकेनकेपीत्यर्थः २२





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ईषदपि नो भिद्यत् चंद्रहासाख्यखङ्गेन तत्राप्यतिरंहसा अतिबलेन २३ खङ्गे निष्फले आत्मनः पूर्वोक्तवैदग्ध्यमाविः कर्त्तुं मां दहेति शिक्षितो रावणः दाहयति सीतया
इति प्रार्थितोऽग्निर्हनुमतः शीतलोऽभूत् न परेषामिति इति किंभो अग्ने यदि संतुष्ट इत्यादि सुगमम् हनुमतः संतापो माभवेति शेषः तत् न दास्यदि तुष्टोसि कीदृशः अग्निः

ईषत्सज्जनमैत्रीवनाभिद्यत कपेस्तनुः निहताच्चंद्रहासेन रावणेनातिरंहसा २३ लांगूले चैलतैलप्लुतबहलशणैर्वेष्टिते दीप्यमा
नो रक्षोभिर्वीक्षितोग्निर्द्विजपरुषगिरा राघवो यद्यतुष्टः तुष्टोयद्याज्यहोमैस्त्वमपि रघुपतेर्यद्यहं भक्तियुक्ता संततः प्रार्थितो मात
दिह हनुमतः सीतया शीतलोऽभूत् २४ वन्हिर्बभौ वानरपुच्छजन्मा संदत्य लंकां खमिवोत्पतिष्णुः रामाद्भयं प्राप्य किल प्रतापः पलाय
मानो दशकंधरस्य २५ पलानि भुक्त्वा चपलः पलाशिनां हुताशनस्तृप्तिमुपागतः पराम् विराजते स्म प्रतियातनच्छलाज्जलानि चा
ब्धौ तृषितः पिबन्निव २६ रावणः स्वगतं यद्ययं रुद्रो मारुतिस्तर्हि किमिति रुद्रभक्तस्य मे नगरीं दहति अहह ज्ञातम् तुष्टः पिनाकी
दशाभिः शिरोभिस्तु तुष्टो न चैकादशमो हि रुद्रः अतो हनूमान् दहतीति कोपात्पंक्तेर्हि भेदो न पुनः शिवाय २७

चैलादिवर्तिलांगूले सति दीपितः सुगमम् २४ वन्हिर्लंकां विदल्य बभौ कीदृशः खं उत्पतिष्णुः उच्चैर्गंतुकः क इव खं प्रतिपलायमान दशकंधरप्रताप इव २५ पलाशि
नां रक्षसां पलानि मांसानि चपलः शीघ्रदाहकः प्रतियातना प्रतिबिंबस्तन्मिषेण २६ हि यतः पंक्तेर्भेदः भेदनं शिवाय मंगलाय न भवति सुगमम् २७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सः प्रसिद्धः कपिः पुच्छेनसाग्निपुच्छेन रवेराजते तत्रकविरुत्प्रेक्षतेकेन क इवसर्वंसुगमम् पुनर्मेघग्रहणं धनुरुत्प्रेक्षार्थं अलंकारदूषितमिदंपद्यंत दुक्तं दंडिना असं
बद्धोपमम् पद्यंनकुर्वीतविदूषितमिति २८ लंकापुरवासिनोराक्षसाः नीचैर्मंदमंद मितिप्रोचुः इतीतिशेषः इतिकिं अहहेतिकष्टं ततः कपिसैन्ये प्रचलति सति
मरुत्पुत्रोहनूमान् पुनः पदं अस्मदीयंस्थानंलंकां प्रत्यायास्यति आगमिष्यति यद्वापदंवचनं कीदृशः एकएवासौ कपिकटकरक्षामणिः यद्वाएकः असहायः असौम

अपिच अब्धिः किंवडवानलेनतरणेर्बिंबेनकिंचांबरं मेघः किंचपलाचयेनशशिभृत्किं भालनेत्रेणवा कालः किंक्षयवन्हिनेंद्रधनु
षाधाराधरः किंमहान्मेरुः किंध्रुवमंडलेनसकपिः पुच्छेनरवेराजते २८ अथराक्षसाः मरुत्पुत्र स्त्वेकः कपिकटकरक्षामणिरसौ
समुद्यल्लांगूलोध्वजइवसमाश्लिष्टगगनः पुनः प्रत्यायास्यत्यहहकपिसैन्येप्रचलितेपदं प्रोचुर्नीचैर्भयचकितलंकापुरजनाः २९
अथाहगगनमंडलस्थोमारुतिः एकोहंपवनात्मजोदशमुखत्वंचापिकोटीश्वरस्त्वांजित्वासमरेप्रभोः प्रणयिनींसीतांचनेतुंक्ष
मः किंसूत्थायभुजंपुराभगवतारामेणसुग्रीवतोहत्वादक्षिणपाणिनावरसुमतींत्वांहंतुमुक्तंवचः ३०

रुत्पुत्रः पुनरायास्यतीतियोज्यम् पुनः समुद्यल्लांगूलः ऊर्ध्वंगतपुच्छः कइवपुच्छः समाश्लिष्टगगनध्वजइव २९ पूर्वार्द्धंसुगमम् शक्तश्चेत्कथंमांनहन्याः सीतां
चनेनयसीत्यत्राह पुरापूर्वंरामेणसुग्रीवतः सुग्रीवाग्रे सुग्रीवंप्रतिवासार्वविभक्तिकस्तसिल् त्वांहंतुंवचनमुक्तं यत्तदूचः अनृतंस्याद्दतोनहन्मीतिभावः ३०



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अन्यत्स्पष्टम्- रक्षितां अग्निना अदग्धां शिखां वेणीमुद्यम्य कीदृशीं धूमशिखां धूमस्येवशिखायस्यास्तां मध्यमपदलोपीसमासः रावणदाहार्थं मलयाग्निधूमशि-
खामिवेत्यर्थः यद्वाधूमस्य धूमकेतोरिवशिखामिव कालसर्पस्यस्त्रियमिव ३१ यदाचित्रकूटेयः काकः काकरूपधरश्चेंद्रः वक्षोभिचारि यथास्यात्तथा वक्षसि-

इत्युक्त्वादशग्रीवनगरीं भस्मसात्कृत्वा रक्षितामशोकवनिकामागम्य जानकीं प्रणम्य रामाभिज्ञानं याचते स्म हनूमान् मै-
थिली शिखां धूमशिखां शत्रोः कालव्यालवधूमिव उद्यम्यास्य शिरोरत्नं संज्ञानं स्वामिनं ददौ ३१ तथाचचित्रकूटपर्वते
वक्षोभिचारिचरुभांडमिव स्तनं यो देव्या विदेहदुहितुर्विददार काकः ऐषीकमस्त्रमधिकृत्य तदा ततो क्ष्णा काणीचकार क-
रुणो रघुराजपुत्रः ३२ इतिद्वितीयमभिज्ञानम् मनःशिलायास्तिलकं तथा मे गंडस्थले पाणितलेन मृष्टम् स्मरेति
संज्ञानमपि प्रयच्छ जीवाम्यतो राघव मासमात्रम् ३३।

अभिचरतीति वक्षोभिचारी देव्यास्तनं विददार तदाच रामः रघुराजपुत्रः ऐषीकं बाणमधिकृत्य तं काकम् अक्ष्णा नेत्रेण काणीचकारेति किमिवचरुभांड-
मिव हविः पात्रमिव ३२ हेराघव अहं त्वदागमनाय मासमात्रं कालं जीवामीत्यपिवाच्यम् इतिशेषः अन्यत् सुगमम् ३३ ५ ६ ६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पाणिभ्यामंघ्रियुगमम् पुनः उदधितटे मंत्रयित्वा अभ्राणिगर्भेयस्य तेनाकाशमार्गेणजगामेत्यन्वयः किंकृत्वाऊर्म्यांसमुद्रोर्मिंअभिव्याप्य तन्मानंसमुद्रप्र
माणंउत्पत्यसमुद्रोर्मिप्रमाणमात्रमुत्पत्येत्यर्थः किंविशिष्टेनाभ्रमार्गेणउरुभुजबलस्याडंबरोयस्मिन् अन्यत्स्फुगमम् ३४ अत्रहनूमद्वसंतयोर्वर्णनम्

तृतीयमभिज्ञानम् हनूमान् रत्नंयत्नाद्गृहीत्वातदनुकपिभटश्चित्रकूटस्यसंज्ञानत्वापादारविंदद्वयमपिजनकस्या
त्मजायाहनूमान् पाणिभ्यामघ्रियुग्मंपुनरुदधितटेमंत्रयित्वाभ्रगर्भेणोर्म्यामुत्पत्यमग्नंतदुरुभुजबलाडंबरेणाजगा
म ३४ ततोमरुच्चुंबितचारुकेसरः प्रसन्नताराधिपमंडलाग्रणीः वियुक्तरामातुरदृष्टिवीक्षितः समागतः श्रीहनु
मान्वसंतवत् ३५ सीतापतिंससंभ्रममालिंगितुमुद्यतंदृष्ट्वादेव पीतोनांबुनिधिर्नकोणपपुरीनिष्पिष्यचूर्णी
कृतानानीतानिशिरांसिराक्षसपतेर्नानायिसीतामया आश्लेषार्पणपारितोषिकमहंनार्हामिवार्ताहरोजल्पन्नित्यनिला
त्मजः सजयतिव्रीडाजडोराघवे ३६ मरुच्चुंबितचारुकेसरः चारुकेसराः पुच्छलोमानिकुसुमकोशतंतवोवा ताराधिपः स्रुग्रीवश्चंद्रोपि वि
युक्तो रामस्तस्या तुरदृष्ट्याविमुक्ताबियोगिन्यरामास्तासामप्यातुरदृष्ट्येतियोज्यम् ३५ आलिंगनार्पणमेवपारितोषिकप्रतिदानंतंप्रतिनार्हामिनयोग्यो
स्मीतिकुत इत्यत आह यतोवार्त्ताहरः संदेशमात्रहारक इतिजल्पन् अनिलात्मजोविजयते ३६ ७ ७ ७ ७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सरामः सविकल्पमितिस्पष्टार्थं एतेनैवमुक्तंभवति अघटितघटनाचातुर्यशालीविधातासीतामपिमेलयिष्यतीतिभावः क्रूरोदयेतिचित्रेचेति धरणिः विचित्र
कर्मा ३७ जगतामानंदोयस्मात् किमियंविमनस्कतेतिपाठः ३८ सर्वंस्रगमम् ३९ हेरामयदिलस्याः कार्श्यंवर्ण्यतेतर्हि हिमनिधेश्चंद्रस्य प्रतिपत्कला-

रामः सविकल्पंविधातारमुपालंभते क्रूरकर्माविधाताकिंविधास्यतीति हनूमान् देव कुत्रायोध्याक्करामोदशरथवचनाद्दंडकारण्यमा
गात्कोसौमारीचनामाकनकमयमृगः कुत्रसीतापहारः क्वसुग्रीवेराममैत्रीक्वजनकतनयान्वेषणेप्रेषितोहंयोर्थोसंभावनीयस्तमपिघटय
तिक्रूरकर्माविधाता ३७ हेवीरविदार्यमाणत्त्हृदयद्वारेणप्राणाल्लोकांतरंगंतुमिच्छंतिकिमितितूर्णंचंद्रवदनांनावेदयसि हनूमान्सत्व
रम् हारामजगदानंदकिमिदंशिवमस्तुते तवप्राणगतिद्वारस्यार्गलेयंकरेमम ३८ इतिजानकीशिरोरत्नंरामायप्रयच्छति तथाच मनः
शिलायास्तिलकंस्मरगंडस्थलेत्वया संमृष्टंजानकीवक्षःस्पर्शाल्काणीकृतंस्रगम् ३९ रामोअभिज्ञानत्रयमासाद्यसाधुमारुतेसाधु अये
प्रियायाःकुशलमस्ति आंजनेयः कार्श्यंचेत्प्रतिपत्कलाहिमनिधेः स्थूला यचेत्पांडिमानीलाएवमृणालिकायदिघनाबाष्पाः कियान्वारि
धिः संतापोयदिशीतलोहुतवहस्तस्याः कियद्वर्ण्यतेरामत्वत्स्मृतिमात्रमेवत्त्हृदयंलावण्यशेषंवपुः ४० स्थूलाचेत्पांडिमापांडुता अथपांडिमावर्ण्य
तेचेत् मृणालिकानीलाएव यदिघनानिरंतराः बाष्पावर्ण्यंतेतर्हिवारिधिः कियान् यद्वा बाष्पावर्ण्यंतेतदाघनावर्षंतोमेघाः तथावारिधिरपिकियान् अन्यद्वृत्तंकियद्व-
र्ण्यतेत्त्हृदयंत्वत्स्मृतिमात्रमेव वपुर्लावण्यशेषमेव ४०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मिथः शृंगारकथाकाएव मुत्तरत्रापिज्ञेयम् एवंविधनिकृष्टेपूर्वोन्तरपक्षेस्थापनात्मकंवाक्यमुक्तम् ४१ ४२ पूर्वदग्धादग्धपूर्वाकपिरहंनिमित्तमेवाभवम् ४३
४४ अभ्रमरोभ्रमरोभवतिभ्रमरीभूतंकीटकंवीक्ष्य एवंतध्यानात् तस्यरामस्यस्मरणात् त्वयिपुंस्त्वमागतेसतितेनरामेणसार्द्धंरतिः कुतः पुंस्त्वमत्रराम



रामः मारुते काकथा हनूमान् भोप्रभो काश्शृंगारकथाकुतूहलकथागीतादिविद्याकथामाद्यत्कुंभिकथातुरंगमकथाको
दंडदीक्षाकथा एकैवास्तिमिथः पलायनकथात्वद्भीतरक्षःपतेर्देवश्रीरघुनाथतस्यनगरेस्वप्नेपिनान्याकथा ४१ रामः
त्रिदशैरपिदुर्धर्षालंकानाममहापुरी कथंवीरत्वयादग्धाविद्यमानेदशानने ४२ हनूमान् निश्वासेनैवसीतायाराज
न्कोपानलेनते दग्धपूर्वातुसालंकानिमित्तमभवत्कपिः ४३ शाखायाश्शाखांगंतुंपराक्रमः यत्पुनर्लंघितों
भोधिः प्रभावोयंप्रभोतव ४४ अत्रांतरालेलंकायांसरमानामराक्षसीं धर्मिणीजानकीवाचमूचे बिभेमिसखिसंवी
क्ष्यभ्रमरीभूतकीटकम् तध्यानादागतेपुंस्त्वेतेनसार्द्धंकुतोरतिः ४५ सरमा माकुरुष्वात्रसंदेहंरामेदशरथात्मजेत्व-
ध्यानादागतेस्त्रीत्वेविपरीतास्तुतेरतिः ४६ इतिश्रीहनुमन्महानाटकेहनुमद्विजयोनामषष्टोंऽकः ६



त्वम् ४५ अत्ररतौ शेषंस्फुगमम् ४६ इतिश्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां नामषष्टोंऽकः ः ६ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रेमभिन्नः अपूर्णकामाभिलाषः कपिनृपतिः सुग्रीवः प्रेयसींरुमामपास्यत्यक्त्वा इतिरघुजन वाक्यात् रामदूतवचनात् सैन्ययुक्तोभूत्वाआगत इत्यन्वयः
इतिकिंतदेवाह हेपापजनकपुत्रीरामयोः कार्यमुच्चैर्महत् यत्त्यक्त्वाइदंस्थैर्यादिकंकिमितिराज्यगर्वात् हरिसूनोर्वालिनोपिगतिर्मरणरूपाविस्मृतातवेति
शेषः यद्वावालिनः सकाशाद्यागतिस्ताराहरणंनिलीयस्थितिरितिरूपागतिः १ विजयमुहूर्तयुक्तायांदशम्यांद्विरदविधुमहाब्जैर्यूथनाथैः सह अंका

रामदूतेनोक्तः सुग्रीवः कपिनृपतिरपास्यप्रेयसींप्रेमभिन्नः किमितिजनकपुत्रीरामयोःकार्यमुच्चैः गतिरपिहरिसूनो
र्विस्मृताराज्यगर्वादितिरघुजनवाक्यादागतः सैन्ययुक्तः १ अथविजयदशम्यामाश्विनेशुक्लपक्षेदशमुखनिधनाय
प्रस्थितोरामचंद्रः द्विरदविधुमहाब्जैर्यूथनाथैस्तथान्यैःकपिभिरपरिमाणैर्व्याप्तभूदिकखचक्रैः २

नांवामतोगतिरितिन्यायात् द्विरदाः दिग्गजाः अष्टौविधुश्चंद्रःएकः एतत्संख्याकमहापद्मैः अष्टादशमहापद्मसंख्याकैर्यूथनाथैः तथान्यैरपरिमि
तैः कपिभिः सहकीदृशैः व्याप्तंभुवः दिशामाकाशस्यमंडलंयैस्तैः द्विरदविधुमहर्क्षैरितिपाठेहस्तितुल्यैर्महर्क्षैर्जांबवत्प्रमुखैः २ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हेनृपतिमुकुटरत्नराम सर्पराजः शेषः त्वत्प्रयाणवर्णावली जरठकमठभर्तुः जरगेवृद्धः प्राचीनः सचासौकमठभर्तामहाकूर्मस्तस्यखर्परेपृष्ठकपाले दश
नटंकैर्दशना एवटंकास्तैर्लिखति स्यात्खर्परः कपालोस्त्रीत्यमरः वानरबलेननिमज्जंतीभूस्तस्याभारेणाक्रांतोभोगोयस्यसः कीदृशैर्दशनटंकैरुत्पतद्भिः
उत्पतत्सुवानरेषु उत्पतद्भिः निपतत्सुवानरेषु खर्परेपतद्भिः ३ पुनरपिनिश्वासोर्मीतिपद्येनवाहिनीभरमेवानुवर्णयति बहुत्वाद्यच्छिरसिइयंभूरत्यर्थंराजते
सएवभुजंगाधिपः शिरोभिर्भुवंधत्ते कीदृशः वानरवीराणांविक्रमेणकूंदनादिविक्रमेणयोभरस्तेनासमंततोभुग्नः वक्रीभूतः पुनः किंभूतः कृतमतः फणानां

हनूमान्रामंप्रति नृपतिमुकुटरत्नत्वत्प्रयाणप्रशस्तिंप्लवगबलनिमज्जद्भूभराक्रांतदेहः लिखतिदशनटंकैरुत्पतद्भिःपत
द्भिर्जरठकमठभर्तुः खर्परेसर्पराजः ३ श्वासोर्मिप्रतिसंधिरुंधितगलप्रच्छिन्नहारावलीरत्नैरप्यदयालुभिःकृतफणाप्राग्भा
रभंगःक्रमः श्रोत्राकाशनिरंतरालमिलितस्तब्धैःशिरोभिर्भुवंधत्तेवानरवीरविक्रमभराभुग्नोभुजंगाधिपः ४

प्राग्भारस्यभंजिकाया भंगक्रमोयेन प्राग्भारोभंजिकामतेतिविश्वः कीदृशैः शिरोभिः श्वासानांयाऊर्मयस्ताभिः संधिप्रतिश्वासनिर्गमन मार्गः संधिःमु
खनासादिः तैरुंधितोयोगलः कंठस्तस्यवायुरोदनस्थलत्वात् प्रच्छिन्नानित्रुटितानिहारावल्याः रत्नानियेभ्यस्तैः अतएवदयालुभिः मिथः संधानपीडा
नभिज्ञैः पुनः श्रोत्राणामभावान्निरंतरालंअंतरालशून्यंयथास्यात्तथाअभितः सर्वतः स्तब्धैः तत्रनैसर्गिकसौकुमार्यैः ४ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तेनधूलीभरेणरोदुमाच्छादयितुंनासीरेषुअग्रयायिषुपुरः अग्रेचलंचलितंपटुलंसैन्यंतस्यालापस्यवागाडंबरस्यलध्रुजैरितिपूज्यत्वाद्बहुवचनं लघुजेतिवापाठः
५ हेमातः अत्रकटकेकाचिन्नृपतिरचनानास्तिइतिभिल्लीभिरभाषि उक्तं इतिकिंबतहास्यं हास्यहर्षविषादेषुबतहाकष्टकोपयोरितिधरणिः उक्षाणोवृषाः शेषंसु

रामः अयेमरुत्तनय कूर्मंक्लेशयितुंदिशः स्थगयितुंभेत्तुंधरित्रीधरान्सिंधुंधूलिभरेणकर्दमयितुंतेनैवरोद्धुंनभः नासीरेषुपुरःपुरश्चलबला
लापस्यकोलाहलात्कर्तुंवीरवरूथिनीममपुरंजैत्रंपुनस्त्वध्रुजैः ५ भिल्लीभिःसहासं नोशस्त्रंनापिवास्त्रंनहिचरथकथानापिदंतीनवाजीनो
क्षाणोनापिचोष्ट्राबतनचशिबिरोनापिराजाजदावान् नोवित्तंनापिवस्त्रंनचनृपरचनाकाचिदत्रास्तिमातः प्रातर्दृष्टुंस्थिताभिर्गिरिवरकुहरेभाषि
भिल्लीभिरेव ६ भिल्लीमातरः विजेतव्यालंकाचरणतरणीयोजलनिधिर्विपक्षः पौलस्त्योरणभुविसहायाश्चकपयः तथाप्येकोरामःसक
लमपिहंतिप्रतिबलंक्रियासिद्धिः सत्वेवसतिमहतांनोपकरणे ७ अत्रांतरेतत्रलंकायांमंत्रणायोपविष्टोमंत्रिभिःप्रोत्साहितोलंकाभटानुल्लं
टंबभाषेबिभीषणः सुवर्णपुंखाःसुभटाःसुतीक्ष्णावज्रोपमावायुमनःप्रवेगाः यावन्नगृण्हंतिशिरांसिबाणाःप्रदीयतांदाशरथायमैथिली ८

गमम् ६ हंतिहनिष्यति वर्तमानसामीप्येवर्तमानवद्वा प्रतिबलंशत्रुसैन्यं क्रियासिद्धिः कार्यसिद्धिः सत्वेधैर्येउपकरणं रथछत्रादिसामग्रीसुगमम् अत्रा
न्यपद्यानिसंतिनत्वक्षेपकानीतिज्ञेयम् ७ मंत्रशालातुमंत्रिणोतिशाश्वतः रामबाणाः तवशिरांसि ८ ननुनराः वानराः किंकरिष्यंतितत्राह वानरमातु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

षीं जातिं मानय बहु जानीहि केयं जातिरिति तत्राह अभिमुखो रणाभिमुखो हे हयोर्जुनः त्वयैव दृष्टः ज्ञातः तत्कारागृहनिवासित्वात्तत्प्रसिद्धाः वानराः अवज्ञातुं
तिरस्कर्तुं सांप्रतं योग्यं न योग्ये सद्योपि सांप्रतेइतिविश्वः कुतः वालिभुजौ स्मृत्वा भ्रूक्रामणे कक्षांतरावस्थितत्वात् नत्तस्मादतएव वानराः महाग्निहोत्रिणं त्वां राम
प्रतापाग्नौ राक्षसकुलहविष्यहोतारं प्रार्थये किं प्रार्थयसीत्यत्राह सीतां मुंच कारागृहमेव कुटुंबं येषां तान् त्वत्कारागृहनिरुद्धान् मुंच सीतां समर्पयेति अन्ये दंदत्तं

बिभीषणो रावणं प्रत्याह जातिं मानय मानुषीमभिमुखो दृष्टस्त्वया हे हयः स्मृत्वा वालिभुजौ च सांप्रतमवज्ञातुं न ते वानराः तत्सोढस्त्य
महाग्निहोत्रिणमहं त्वामेवमभ्यर्थये सीतामर्पय मुंच चक्रनुभुजः काराकुटुंबीकृतान् ९ त्यज स्वकोपं कुलकीर्तिनाशनं भज स्वधर्मं कुल
कीर्तिवर्धनम् प्रसीद जीवेम सबांधवा वयं प्रदीयतां दाशरथाय मैथिली १० रावणः सक्रोधम् जानामि सीतां जनकप्रसूतां जानामि रा
मं मधुसूदनं च वधं च जानामि निजं दशास्य स्तथापि सीतां न समर्पयामि ११ इति वामचरणेन बिभीषणं ताडयामास बिभीषणः ततश्च
तुर्भिः सह मंत्रिपुत्रैरुत्सृज्य रक्षः कुलधूमकेतुं लंकामहातंकइवांबरेण बिभीषणो राघवमाजगाम १२ पुरा रावणेन धर्मं त्याजितैर्मुनिभिः रुषा स्व-
स्वांगजनितघर्मजलं कुंभे प्रक्षिप्तं एतेन तव नाशो भविष्यतीत्युक्त्वा कुंभं भूमौ निधाय गताः ततो जनकयज्ञार्थं हलाकर्षणकाले तद्भेदादाविर्भूता सीता सा जनक
जेत्युच्यते अतो जनकप्रसूतामित्युक्तं ९ १० वधं च जानामीत्यनेन मम वधोवश्यं भवितेति ध्वनितं तां तु न समर्पयामीत्युक्तं कुतो न समर्पयसीत्यत्राह दशा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्यइति दशास्योभूत्वा एकास्याय कथंसमर्पयामीति गूढोभिप्रायः अन्यत्सुगमं ११ कइव बिभीषणः लंकायाः महातंकः भयमिव पुनः रक्षःकुलायधूमकेतुरिव अत्ययहेतुरित्यर्थः सुगमम् १२ अयंरघुपतिः अस्यबिभीषणस्याद्येवलंकाधिपत्यंश्रियंददाति दास्यतिकस्याः मूर्ध्नानतेर्बिभीषणेनक्रियमाणाया-मूर्ध्नामस्तकेनानतिर्दंडवत्प्रणिपातः सएवानृण्यंतद्धानायनमतः आनृण्यायेत्यर्थः अत्रविचिकित्समानान्कांश्चिदाहुः इहसंदेहे एतस्यरामस्यैव भुजौसुग्रीवराज्यार्पणप्रतिभुवावुदारौ आर्द्रौवाशत्रुजारमहोदारजलेषुप्रतिभूरस्त्रियामितिशाश्वतः अत्रसर्वेवयंसाक्षिणः कीदृशाः त्रैलोक्यप्रथिमापृथुत्वंसर्गसमयः

आगतेबिभीषणेपरस्परंवानराः अद्यैवास्यबिभीषणस्यशरणापन्नस्यमूर्ध्नानतेरानृण्यायददात्ययंरघुपतिर्लंकाधिपत्यश्रियं एनस्यैवभुजाविह प्रतिभुवौसुग्रीवराज्यार्पणेत्रैलोक्यप्रथिमानसत्यचरिताः सर्वेवयंसाक्षिणः १३ याविप्भूतिर्दशग्रीवेशिरश्छेदेपिशंकरात् दर्शनाद्रामदेवस्यसाविभूतिर्बिभीषणे १४ ततोरामेण अथदशरथपुत्रेतत्रसौमित्रिमित्रेष्वुदगुदधितटांतेगर्भदर्भाविकीर्णे अहमिहहनिविष्टेनागतोग्रेतिरोषाद्यदिजलधिरनेनाप्यत्तमाग्नेयमस्त्रं १५ अनः असुरवंनाशइति नश्वनिर्वृतिवाचकइत्युक्तत्वात् सर्गनाशयोर्मध्येसत्यचरं-पूर्वंसत्यचरम् भूतपूर्वेचरट् विश्वादिमध्यावसानेचसत्यंरामंइताः शरणंप्राप्ताः तद्रक्षाइति अन्योर्थः स्पष्टएव तथासुग्रीवाग्रजंहत्वातस्मैराज्यंदत्तं अस्याग्रजमपिहत्वा अस्मैराज्यंदास्यतीतिभावः १३ शिरसांकर्तनेकृतेसति एतेनसेव्यत्वंतमः शरीरत्वंद्योतितं १४ ततः बिभीषणः रामपादौप्रणम्योपविशति दशरथपुत्रेउदक्उदधि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तटांतेउत्तरदिक् समुद्रतटेविनिविष्टेसति यदियदाजलनिधिः अग्रेरामपुरतोनागतः देवरूपेणनाविर्बभूव तदाअनेनरामेणापि आग्नेयंनज्जलशोषणहेतुं अस्त्रं
बाणंआददेगृहीतं कीदृशेतटे गर्भैमध्यदेशेउपवेशनस्थानेदर्भैराकीर्णे आस्तृतदर्भे इत्यर्थः १५ मैनाकवात्सल्यादितिभावः मृगंमारीचंवंचनहेतुत्वात् कपिंहनु
मंतंसीतामार्गणाहेतुत्वात् तपोधनंशापदातारं वैश्यंदशरथशापदातृत्वात् वनंसीताहरणहेतुत्वात् राक्षसवधेमांसबाहुल्यादिभिरुपकारः कृतइतिभावः १६
ततअतिभयेनैवाशुवारिधिः स्वस्मिन्कृपासुत्पादयितुंतत्पूर्वजकर्तृत्वमात्मनोद्योतयन्नवध्यत्वमाविष्करोति अस्मद्गोत्रेइति भोराम तवप्राग्भवः पूर्वजः सगरः अ

श्रीरामचंद्रेदशवक्त्रहानौकृतोद्यमेक्रव्यभुजः समस्ताः मित्राण्यमन्यंतमृगंकपिंचतपोधनंगादतरंवनंच १६ समुद्रोरामंप्रति अस्मद्गो
त्रेभविष्यद्दशरथनृपतेरश्वमेधेषुसर्पिः संतापोत्तापलोलज्वलदनलकलाव्याकुलंकूर्मराजं ज्ञात्वारोदःपुटंवानन्नुतवसगरःप्राग्भवोभाविवे
नानेतासप्तांबुधीनामपिसविधमवाग्वांतरश्मिस्रवंतीम् १७ धिउच्चैः सविधंगंगामवाकृनिर्ममे आनीतवानितियावत् यद्यपिभगीरथेनानीतागंगात
थापि अश्वान्वेषणपुत्रदाहादिबीजत्वात्सगरएव आनीतवानितिध्वन्यर्थः उपर्यध्यधसः समाइतिशाश्वतः गंगावांतिकगर्भोद्दविनेषुसविधोस्त्रियामितिधरणिः अत्र
गर्भोद्दसविधार्थैक्येनगंगागृह्यते अवागितिवचिनिर्माणेइति अस्यधातोर्लुङिरूपं कविकामधेनौ नन्नुपुनरपिसप्तांबुधीनांवांताः अधोगताः येरश्मयस्तरंगास्ते
षांस्रवंतीम् अष्टमंसमुद्रंमामंगीकृत्येत्यर्थः यद्वासप्तांबुधीनांमध्येसमंमामकृतेत्यर्थः विसर्गांतपाठेवांताः सर्वगताः रश्मयस्तेजांसि अश्वरत्नीपशुभेदेपुमानिति



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धरणिः नद्यष्टमप्रधानेषु स्रवंतीस्यात्सुमान्हरेरितिचरकः अतः स्रवंतीं अष्टमंकिं कृत्वा अस्मद्गोत्रे वंशेभावी योदशरथाख्यनृपतिस्तस्याश्वमेधेषु यः सर्पिः
संपातः घृतादिहोमस्ततोयउत्तापस्तद्युक्तायाः लोलाः सर्वतः प्रसरंत्योज्वलदनलस्यकलाः ज्वालास्ताभिर्व्याकुलं अधः कूर्मराजः ज्ञात्वाऊर्ध्वंचरोदः पुटं द्यावाभूमीच-
रोदसीत्यमरः द्यावाभूमीज्ञात्वा नन्वेतत्सुरैर्वकथंज्ञातमितिचेत्तत्राह भाविवेत्ता एतद्भविष्यतीतिज्ञानवान् यतस्त्वत्पूर्वजकर्तृकोहमतोभवद्वध्योस्मीतिभावः विषवृ-
क्षोपिसंवर्ध्य स्वयंछेत्तुमसांप्रतम् १७ १८ अत्रेदंपूर्ववृत्तं मंदरपर्वतस्थोविश्वकर्मानलपिता प्रसन्नः सन्नलमात्रेवरंददौ तवपुत्रोनलोमत्तुल्योभविता अन्यच्च

चापमानयसौमित्रे राघवेधिज्यधन्वनि समुद्रंशोषयिष्यामि पदागच्छंतुवानराः १८ ततः प्रांजलिपुटोपस्थितस्यसमुद्रस्याज्ञयानलेननिबध्यमा
नेसेतौतरतः प्रस्तरानवलोक्याह हनूमान् येमज्जंतिनिमज्जयंतिचपरांस्तेप्रस्तरादुस्तरेवार्द्धौवीरतरंतिवानरभटान्संतारयंतेपिच नैतेग्रा
वगुणानवारिधिगुणानोवानराणांगुणाः श्रीमद्दाशरथेः प्रतापमहिमारंभः समुज्जृंभते १९ कपेश्चसेनाप्लवगैः पुरोगैः पाथोमयंभूवलयंव्यलोकि न
सृष्टगैः पंकमयंतदान्यैरासीदिहांभोनिधिरित्यवादि २० शिल्पकर्मणिअनेनप्रक्षिप्तंशिलातृणकाष्ठादिकमपिजलेप्सुपर्यैवस्थास्यते अतोनलेनसेतुर्बद्धइतिरा

मायणोक्तं एतेगुणाः प्रस्तरतरणरूपाः ग्रावाणः प्रस्तराः शिलाइतिशाश्वतः हेश्रीमद्दाशरथेयद्वा षष्ठ्यंतं श्रीमद्दाशरथेस्तव १९ एनसद्येनसैन्यबहुत्वंद्योतितं ननु वास्तवं
यद्वानराणांउन्मादोजातः सचानिवाहयंतः ततोभ्रमस्तस्मादियमुक्तिः अन्यथासमुद्रेपंकादिदर्शनंपुनस्तदभावोपिवास्तवश्चेत्ततः सेतुबंधनादिकमप्रयोजकंस्यात् उक्तंच
रसोदधौ प्रौढानंददसुजोयोतद्रूपः सउन्मादइति २१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इतिहनुमन्नाटके टीकायां सेतुबंधः सप्तमोंऽकः ७ विकीर्णसर्वतोविक्षिप्तं सैन्यं यस्य सुवेलपर्वतावतारे १ रभसो गर्ववेगयोरिति चरकः नत्यजसि तर्हि लक्ष्मणेन मुक्ताः ये मार्गणगणा बाणव्रातास्तैर्ये छेदाः प्रहाराः तेभ्य उच्छलंति उद्गच्छंति शोणितानि तद्युक्तैश्छत्रैः कंठैरातपत्रैर्वा छन्नमाच्छादितं वा यथा स्यात्तथायमपुरं यास्यसीति ग्रीवातपत्रयोश्छत्रमिति शाश्वतः अत्र छत्रं ग्रीवा २ चेद्यदि पितृवैरमतुस्मृत्य शमं हन्मि तर्हि महदकार्यं स्यात् चेत्पितुर्वालिनो हंतुर्घातकस्य रामस्य हंता नोस्मि न स्यां तर्हि अपिशब्दात्पुनर्जनयितुर्वालिनश्च परमं महत् उत्पन्नमुपस्थितं संपूर्णं कार्यं स्यात् वैंशब्दादत्रापि पुनर्योजनम् तथापि पितुर्हंतुः-

इतिश्रीहनुमन्नाटके सेतुबंधनंनाम सप्तमोंऽकः ७ रामः सुवेलाद्रितटेवतीर्णः समुद्रमुल्लंघ्य विकीर्णसैन्यः कृपामुपेत्यारिकुलस्य दूतं सुरेंद्रनप्तारमथादिदेश १ रामः भोमहावीरांगद अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षेत्वया सीतेयं परिमुच्यतामिति वचो गत्वा दशास्यं वद नोचेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणितच्छत्रच्छन्नदिगंतमंतकपुरं पुत्रैर्वृतो यास्यसि २ अंगदः यदाज्ञापयति देवः स्वगतम् हंतुर्हंतास्मि नोचेत्पितुरपि परमोत्पन्नसंपूर्णकार्यं स्यादूवें युद्धे वधिष्याम्यखिलकपिभटै रुत्कटोहं तमेकः ज्ञात्वा संत्यज्य वैरं गगनमिति समुत्पत्य लंकोद्भटस्य प्रौढः पट्टाधिरूढः सुरपतिसुतजस्तन्महोत्पातकेतुः ३ रामस्यापि कार्यं स्यात् वालिनोपि रावणः शल्यं रामस्यापि अत एव तद्धनने उभयोः कार्यं स्यादिति भावः अतोखिलकपिभटैः सार्धमपि तं राममेकोप्यहं वधिष्यामीति ज्ञात्वा विचार्य वैंरमपि संत्यज्य गगनं रसमुत्पत्य लंकाधिपस्य पट्टाधिरूढः बहिःसिंहा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सनस्थोभवदित्यर्थः तत्रापिप्रौढः सगर्वः सुरपतिसुतोवालीतस्यतनयः तस्यरावणस्यात्यनिष्टाय महोत्पातकेतुः धूमकेतुः ३ रेइत्यनादरे रेराक्षसाः कथयत वदत
रावणाख्यः रावणेतिनामाराक्षसः कः कीदृशः रवींदुकुलयोः सोमसूर्यवंशयोः मध्येरत्नंरूपगुणासाधारणींसीतामपहृत्यनष्टः निलीयस्थितः त्रैलोक्यदीपनकरस्यरुद्र
स्यत्रिशिखवत् त्रिशूलवत्करालेभयंकरेसुगममन्यत् ४ अत्रउक्तिप्रत्युक्तोद्घाटनं एवार्थेपिशब्दः सोऽपित्वंलमेव अंगदः सोपित्वंकमिवावगच्छसि कमिवजानासि

ततः प्रविश्यत्यंजलिबद्धः प्रहस्तः देवरामस्यदूतः शाखामृगोद्वारे रावणः प्रवेशय ततः प्रविशति सहांगदः आकाशेलक्ष्यंबध्वा अंगदः रेरा
क्षसाः कथयत कुत्र रावणाख्योरत्नंरवींदुकुलयोरपहृत्यनष्टः त्रैलोक्यदीपनकरत्रिशिखाकरालेयोरामनामदहने भविता पतंगः ४ रावणः
साभ्यसूयम् सोपित्वं कमिवापगच्छसिपुरायोदाहिलांगूलतो बद्धोमत्तनयेनहत सकथंमिथ्यावदन्नः पुरा किंलंकापुरदीपनंतव सुतस्तेना
हतोक्षोयुधीत्युक्तः कोपभयत्रपाभरवशः स्तूष्णीमभूद्रावणः ५ रावणः कस्त्वंवानररामराजभवने लेख्यार्थसंवाहको यातः कुत्र पुरागतः सह
नुमान्निर्दग्धलंकापुरः अंगदः साधिक्षेपं बद्धोराक्षससूनुनेति कपिभिः संताडितस्तर्जितः सव्रीडार्तिपराभवो वनमृगः कुत्रेतिनज्ञायते ६

यः पुरालांगूलतः अदाहि मत्तनयेनेंद्रजिताबद्धश्च हंहेहेनिवितर्के सहनूमान् नः अस्माकंपुरोग्रेकथंमिथ्यावदत् किंमिथ्योक्तं अंगदः लंकापुरीदहनंमयाकृतमित्युक्तम्
तवसुतोऽक्षनामानिहतइत्युक्तम् तेनांगदेनोक्तोरावणस्तूष्णीमभूत् कीदृशः कोपो अंगदेभयंहनूमतः त्रपाश्रोतृभ्यः एतदधीनः रावणः ५ अत्राप्युभयवादः योहनुमा
नपुराआगतः सकुत्रयातः व्रीडैवार्तिस्तनः पराभवोयस्य ६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संभाव्यते संभावितः क्रियते अदीदलत् उन्मूलयामास सुगमम् ७ अत्रानेकानिपद्यानिक्षेपकानि तेषुकानिचिल्लिख्यंते योजनकजांप्रति कौशल्यंरामकुशलत्वम
वीवदत् आराममममूमुटत् भंगीचकार मुटभंगे सहनूमान् प्रवीरोद्यमे प्रकृष्टानांवीराणांसंमर्द्दसाति योद्धुंनादिश्यते परंतु दूरोल्लंघने दौत्येचादिश्यतेइति यस्त्वताद्दग
वमानंकृतवान् सोस्माकंनकियानपीतिभावः ८ रे अंगद सएकएवकपिर्वध्योस्ति ननुबहुषुवीरेषु सत्सु कथमेकएववध्य इत्यपेक्षायांआह रामः स्त्रीविरहेणहा

अंगदः योयुष्माकमदीदहत्पुरमिदंयोदीदलत्काननंयोक्षंवीरममीमरद्धिरिदरीयोंबीभरद्राक्षसैः सोस्माकंकटकेकदाचिदपिनोवीरेषुसंभाव्य
तेदूतत्वेनइतस्ततः प्रतिदिनंसंप्रेष्यतेसांप्रतं ७ अपिच योलंकांसमुदीदहत्तवसुतंरक्षांसिचापीपिषद्यः कौशल्यमवीवदज्जनकजा माश्वितया
तीतरत् यश्चाराममममूमुटत्सहनुमानस्मत्प्रवीरोद्यमे दूराक्रामणदौत्यएवनपुन र्योद्धुं समादिश्यते ८ रावणः सावज्ञं रामः स्त्रीविरहेणहारित
वपुस्तच्चिंतयालक्ष्मणः सुग्रीवोंगदशल्यभेदकतयानिर्मूलकूलद्रुमः गण्यः कस्यबिभीषणः सचरिपोः कारुण्यदैन्यातिथिर्लंकातंकविटंकपा
वकपटुर्वध्योममैकः कपिः ९ रितंवपुर्येनसः तच्चिंतयारामस्यचिंतयालक्ष्मणोपिहारितवपुः सुग्रीवः निर्मूलकूलद्रुमः निर्मूलितनदीतटवृक्षवत्सातुकः अतिदृ
ढत्वात् अंगदशल्यभेदकतयावालीतुतेनघातितः तत्सुतोंगदस्तस्यभेदकतयासशल्योनिरुत्साहः सन् मृतवत् बिभीषणः कस्येति केनगण्यः सचबिभीषणः रिपोःराम
स्यकारुण्यस्यदैन्येनमनोबलाभावेनअतिथिर्जातः कारुण्यंकरुणाघृणेत्यमरः कीदृशः कपिः लंकायास्तद्वासिजनानांआतंकविटंकः भयनिर्मितोयः पावकः तद्दाने

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पट्टुः मध्यमपदलोपीसमासः यद्वा स्त्रीविः अर्हेणह्वा अरितवपुरितिपदच्छेदः स्त्रीविः सीताकामुकोरामः अर्हेणकोपातिशयेनअरितवपुः शत्रुघातकशरीरः हे
निकष्टं पक्षिकामुकयोर्विः स्यादित्येकाक्षरः अर्होरिति दिनकोपातिशययोरितिलिंगानुशासने अरितः शत्रुघातुकइति सारस्वतः अयंवार्थः ९ वन्यपतेर्वालिनःए
कस्मिन्नहनियातः एकान्हिकः अत्रविषयेरावणःकोभूयात् कोपिभवतु अंगदः अनरण्याख्योरामपूर्वजः अपूर्वरणेरावणेनहतस्तद्वैरंस्मारयति अनरण्यकस्य

कस्त्वंवन्यपतेःसुतोवनपतिःकः सार्धिकस्त्वेकदाप्रातः सप्तसमुद्रलंघनविधावेकोन्हिकोवेद्मितम् अस्तिस्वस्तिसमन्वितोरघुवरेरुष्टेः
त्र्यकः स्वस्तिमान्कोभूयादनरण्यकस्यमरणातीतोचितांबुप्रदः १० रामः किंकुरुतेप्रतीपविजयंकोसौप्रतीपोजितोवालीसोपिचकोनवेत्सिकि
ममुंकोवेत्तिशाखामृगम् आस्तेत्रापितवास्तिविस्मृतिरहोमोहोमहानीदृशः पर्यंकेनिजबालकेलिकृतयेबद्धोसियेनोपरि ११

राज्ञः मरणसमयादागतंयदुचितांबुत्वद्रुधिरतर्पणंतत्प्रदः यस्त्वद्रुधिरेणानरण्यंतर्पयिष्यतीतिभावः अत्रसर्वत्रैकांकेउक्तार्थवादःनियोक्तुविस्मृतित्वात् १० असौ
त्वदुक्तोरामइतियोज्यम् आस्तुस्यात्कोपपीडयोरित्यमरः येनवालिनामदीयक्रीडार्थंउपरिपर्यंकेऊर्ध्वचरणोधःशिराः त्वंबद्धोसितत्रापितस्मिन्नपिवालिनित
वापिभवतोविस्मृतिः अहोमहदाश्चर्यंमोहोभूदत्तामहानस्तीति ११ रावणविजयिवालिहननाद्रामबलमुपदिश्यपुनः कैमुतिकन्यायेनराममनुवर्णयति दुर्भे-
द्यान् अजेयान् दैत्यनिवहान् समुद्रलंघनविघ्नकरान्दैत्यव्रजान् संपीड्यहत्वालंकापुरींप्रविवेशेतियोज्यम् क्षिप्त्वातिरस्कृत्य त्वां हत्वात्वयिविद्यमानेत्वत्सुतहननंत्व

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हननम् पुरींलंकांप्रदहन्सचवानरोपितूष्णींगतः असरक्षानेकशोरामः कथंवर्ण्यतइति १२ आः कोपे तेनरामेणकिंनकिमपीत्यर्थः असौ मल्लक्ष्मणः रावणः निजभुजान् आत्मभुजपराक्रमान् जानाति किंविशिष्टान् भुजान् साद्रिंरुद्रमुदस्यतः उद्धृतवतः कीदृशंरुद्रंशैलाश्चसागराश्चधराचएतेषामाधारश्चासावुरगेंद्रश्चसएवं गदंबाहुभूषणंयस्यतम् पूर्वभागप्रकरणेस्पष्टएवार्थः प्रतिपाद्यते तेनरामेण अजगवंभग्नंरामेतरैर्मनसाप्यधृष्यंकिमुभंक्तुंत्रुटिताधृष्ययोर्भग्नं भग्नोस्त्रीनाशस्यं डयोरितिशाश्वतः रामेणेतिसर्वत्र वालीक्षतः घातितः कीदृशोवाली सुक्षतः शोभनाः विजयसूचकाः क्षताः प्रहारायस्य अनेकयुद्धविजयीत्यर्थः तालाः हताः हिं-

अंगदः आदौवानरशावकः समतरद्दुर्लंघ्यमंभोनिधिंदुर्भेद्यान्प्रविवेशदैत्यनिवहान्त्संपेष्यलंकापुरीं क्षिप्त्वातद्धनरक्षिणोजनकजांदृष्ट्वा तुभुक्त्वावनंहत्वाक्षंप्रदहन्पुरींचसगतोरामः कथंवर्ण्यते १२ रावणः समाक्षिपति भग्नंभग्नमुमापतेरजगवंवालीक्षतः सूक्ष्मतस्तालाः सप्तहताहताश्चजलधिर्बद्धश्चबद्धश्चसः आः किंतेनसशैलसागरधराधारोरगेंद्रांगदं साद्रिंरुद्रमुदस्यतोनिजभुजान्जानात्यसौरावणः १२

सिताः परमारणोपायज्ञाः हनहिंसागत्योः गत्यर्थाः ज्ञानार्थाः जलधिर्बद्धः किंभूतोजलधिः दुष्प्रेक्ष्यः किमुबद्धइति बंधनेपडुरालोके बद्धः संख्याजयोः पुमानितिधरणिः किंकृत्वाधनुर्भग्नंरुद्रंदंडमुदस्योच्चैराक्षिप्येति तालाः किंकृत्वाहताः सशैलसागरधरश्चासावुरगेंद्रः शेषः तस्यांगदंउदस्य लक्ष्मणपादांगुष्ठेनाक्षिप्य शिरोवानरभूषासुजनकेप्यंगदः पुमानितिधरणिः जलधिर्बद्धः किंकृत्वा वरुणार्कयुक्तोदकस्यतद्दहत्वात् साद्रिर्वरुणपंकयोरितिहैमः अद्रयोद्रुमशैलार्काइत्यम





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रः असौरावणो निजभुजान् जानातीति कटाक्षः कीदृशोसौ ततः चौर्यकृत् तकारश्चौर्यगर्वयोरितिहैमः १३ ध्यानपूर्वकं संध्यार्चनंचतेनचरितंकृतं एवंभूतोवा
ली येनरामेण एकेनैवबाणेनहतः कोपेनहतः सोपिवाली प्रगर्वंत्यक्त्वा द्युमणिसुतोयमस्तत्पुरंपतितः प्राप्तः तस्माद्धोलंकेश गर्वंमुंच केवयंवानरव्रीडयैव वान-
राणांलज्जयैववयमपुरंगतइति त्वद्दूजयीवाल्येवाहतः भवतः काकथेतिभावः १४ निजालयमिवनिजगृहमिव सीताअदर्शिच समभ्यभाषिच यस्यसंदे

अंगदः साटोपं स्वामिभक्तिमभिनीय कृत्वाकक्षागतंत्वां कपिकुलतिलको वालिनामाबलीयान्भ्रांतः सप्ताब्धितीरेक्षणमिवचरितं
स्नानसंध्यार्चनंच बाणेनैकेनयेनाहतइतिपतितो वानरो व्रीडयेव त्यक्त्वासोपिप्रगर्वं द्युमणिसुतपुरंमुंचलंकेशगर्वम् १४ यत्संदेशह
रेणमारुतसुतेनातारिवारांनिधिः क्षिप्रंगोष्पदवन्निजालयमिवप्रावेशिलंकापुरी सीतादर्शि समभ्यभाषिचवनंचाभंजिरक्षःप
तेः सैन्यंभूयवधिव्यदाहिचपुरीरामः कथंवक्ष्यते १५ रावणः सक्रोधम् कुतोहंतारण्येकनकमृगमात्रंतृणचरंकुतोहृद्यात्तुद्द
क्षप्लवननिपुणोवालिनिहतः कुतोवन्हिज्वालाजटिलशरसंधानसुदृढस्त्वहंयुद्धोद्योगीगगनमधितिष्ठेंद्रविजयी १६

शहरेणैतत्कृतं सरामः कथंकथ्यतइतिध्वनिः १५ अरण्येतृणचरंतत्रापिकनकमृगमात्रं नतुसिंहादिहतवानितिशेषः हंताघातुकः कुतोयातः गगनमधितिष्ठेअ
धिश्रियेगगनलोकानपिजितवानितिभावः कीदृशोहं इंद्रविजयी अत्रैकारादिकारलोपः तदुक्तंशब्दभास्करे क्वचिदेङः अकाराकारेकाराणांक्वचिल्लोपः स्यान्नश

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

श्वत् सुगमम् अथवागर्थः तृणंपिशितशष्पयोरितिहैमी तृणचरंमांसाशिनं रक्षोरूपं रक्षोनाद्वीपिशारिवनोरितिधनंजयः द्वीपादपिद्वीपप्लवने द्वीपोल्लंघने
विदग्धः कुतोरामएवतद्भूता वन्हिज्वालेत्यादिरामविशेषणम् पुनः कीदृशोरामः इंद्रस्यविजयः इंद्रविजयः इंद्रजयकारकइति कुतोहं रावणः उद्गतोयोगः
उद्योगः उद्योगीरणसभयः सन् अधितिष्ठेगगनंलाघवम् १६ संधौअक्षतः दशाननीतिपाठे समाहारेईप् दशानामाननानांसमाहारस्त्यमिति १७ खरदू

अंगदः समदम् संधौवाविग्रहेवापिमयिदूतेदशानन अक्षतोवाक्षतोवापिक्षितिपीठेलुठिष्यसि १७ अवेहिमांरावणरामदूतं
बाणायदीयाः खरदूषणैणम् भुक्त्वातृषार्ताइवशोणितांभः पास्यंतितेकंठघटैः सरंध्रैः १८ रावणः रेरेवानराधमकटुप्रला-
पिन्पश्य मृत्युःपादांतभृत्यस्तपतिदिनकरोमंदमंदंममाग्रेप्यष्टौतेलोकपालाममभयचकिताः पादरेणुंववंदुः दृष्ट्वातंचंद्रहा-
संस्त्वतिसुरवधूपन्नगीनांचगर्भोनिर्लज्जौतापसौतौकथमिहभवतोवानरान्मेलयित्वा १९ अंगदस्तत्क्षणाविष्कृतक्रोधःकं
पमानः पाणितलेनभूतलंताडयित्वादोः स्तंभास्फालकेलिंनाटयति

षणौइत्युपलक्षणम् खरस्त्रिशिरसएवएणाः एणानांमांसंऐणं अन्य
त्सुगमम् १८ एतन्ममैश्वर्ये सतिनिर्लज्जौतापसौ इहमदग्रेवानरान्मेलयित्वा तांसीतांकथंभवतः प्राप्नुतः भूप्राप्तावात्मनेपदीवा अथवागर्थः प्रतिपद्यतेनि
र्गताब्रह्मांडेलज्जायाभ्यां यौवीस्यान्येसलज्जाभवंतीति तापसौतपोहृदयौ तपोमेहृदयंसाक्षादित्युक्तत्वात् कथंशिरश्चालनेकथंभवतः अपितुभवतएव
१९



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रामस्योत्तुंगौ सर्वोत्तमौ यौ पतंगचापौ बाणधनुषी तयोर्युगले तेजोभिः क्षात्रप्रतापैः कृत्वा आडंबरे समारब्धे सति पतंगौ रविमार्गणाविति विश्वः आडंबरः समारंभ गजगर्जितसूर्ययोरिति विश्वः यद्वा कीदृशे समरे रामस्योत्तुंगपतंगचापयुक्ताः अलादिशो यत्र सर्वदिक्षु रामबाणचापावेव दृश्येते यत्र नान्यत् अलोस्त्री दिक्प्रदानयोरिति चरकः पुनः कीदृशे समरे तेजोभिराडंबरे प्रागल्भ्यं यत्र अखिलं शीर्ष दशकं तस्य समूहः अनेन शीर्षाणां समूहः शैर्षम् २० क्रूरेति कटुप्र

रे रे राक्षसवंशघातसमरे नाराचचक्राहतं रामोत्तुंगपतंगचापयुगले तेजोभिराडंबरे मन्ये शैर्षमिदं त्वदीयमखिलं भूमंडले पातितं गृध्रैराक्षुठितं शिवाकवलितं काकैः क्षतं यास्यति २० रावणः सप्रपंचं रे रे शाखामृग त्वामहं धर्मशीलतया कटुप्रलापिनमपि न हन्मि उक्तं च यथोक्तवादी दूतः स्यान्न स वध्यो महीभुजा क्रूरस्तदीयकोपेन क्वचिद्वैरूप्यमर्हति २१ अंगदः सवैदग्ध्यं परदारापहरणेन श्रुतायादशानन दृष्टा दूतपरित्राणे साधोस्ते धर्मशीलता २२ रावणः सगर्वम् इंद्रं माल्यकरं सहस्रकिरणं द्वारि प्रतीहारकं चंद्रं छत्रधरं समीरवरुणौ संमार्जयंतौ गृहान् पाचक्ये परिनिष्ठितं हुतवहं किं मद्गृहे नेक्षसे रक्षोभक्ष्यमनुष्यमात्रवपुषं तं राघवं स्तौषि किम् २३

लापी तदीयकोपेतस्मिन्दूत एव यः कोपस्तेन क्वचित्कस्मिंश्चिदंगे वैरूप्यं विरूपत्वं कर्णनासाद्यभावम् २१ २२ इदं व्यंजकं तेन धर्मशीलत्वमुक्तमबलत्वं च प्रकरणार्थस्तु स्पष्ट एव अथ वागर्थः प्रतीयते वाणी कथयति हे रावण स्वकीये गृहे किं वस्तु स्तौषि न वस्तु किमपि नास्तीति भावः मत् मत्तः वाण्याः सकाशात् वर्णनद्वारेण

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तं राघवं न ईक्षसे न विचारयसि तं कं यस्यैंद्रं माल्यकरमित्यादियोज्यम् यत्तदोर्नित्ययोगात् कीदृशं राघवं रक्षांसि भक्ष्याणि वध्यानि यस्य एवंभूतं मनुष्यमात्रं मनु-
ष्यमात्रा अंशा यस्य एवंभूतं वपुर्यस्य २३ हीना अल्पा तत्रापि दीना अनुकंप्या विमतिर्विपरीता मतिर्यस्य तत्संबुद्धिः उक्तं रसोदधौ शास्त्रविचारसमुत्थे निर्धार
णमर्थतो मतं विबुधैरिति अत एवाशास्त्रीयमते त्रिपदं वा संबोधनम् त्रैलोक्ये प्रकटः प्रसिद्धः प्रतापस्य विभवो वैभवं यस्य स इति सुरगजः इंद्रहस्ती किं-

अंगदो विहस्य रे रे रावण हीन दीन कुमते रामोपि किं मानुषः किं गंगापि नदी गजः सुरगजोप्युच्चैःश्रवाः किं हयः किं रंभाप्यबला कृतं किमु
युगं कामोपि धन्वी न किं त्रैलोक्य प्रकट प्रतापविभवः किं रे हनूमान्कपिः २४ रावणः सरोषम् कस्त्वं कस्यासि पुत्रः क्व पुनरिह गतः किं तु कृत्यं
च कस्मादित्स्पष्टं विष्टपानां विजयिनमपि मां मन्यसे त्वं तृणाय हं हो पौलस्त्यपुत्र स्तवबलमथनस्यांगदोहं सुवेलात्संप्राप्तो रामदूतो विसृज
जडमते जानकीं वा शिरो वा २५ रावणः धिग्धिगंगद मानेन येन ते निहतः पिता निर्मानावीरवृत्तिस्ते तस्य दूतत्वमागतः २६ अंगदः
युक्तं कृतं तु रामेण येन मे निहतः पिता त्रैलोक्यं शास्ति कृत्याय वर्तन्ते स दुरात्मनाम् २७ साधारणो गजः अपि तु न तथोच्चैःश्रवः काम हनुमतां प्रत्येकं प्र
थमैकवचनं विशेषणं यद्वा बहुवचनं किं विशिष्टाः सर्वे त्रैलोक्य प्रकट प्रसिद्धः यः प्रतापस्तेन विभवः ईश्वराः एतेनैतेषामैश्वर्यप्रीषणत्वं द्योतितं उक्तं च रसोदधौ ऐ
श्वर्यैः राक्षतिभिः प्रकृतिभिरपि भीषणस्त्रिधा गदिता इति २४ इह लंकायां पूर्वं गतः हनुमान् क्व अधुना कुत्रास्ते विष्टपानां स्वर्गनिवासिनां देवानामपि विजयिनं मां तृणाय



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मन्यसे तृणप्रायं अंगदः हंहो आश्चर्यं हे पौलस्त्य नवबलमथनस्य वालिनः पुत्रोहम् २५ दूतत्वं दूतभावम् २६ शास्तिर्निग्रहः स एव कृत्यं यस्मै परदारापहारिणो हननं यु
क्तमिति भावः २७ अतरलं संग्रामेषु पलायनं नाकनिकाया देवास्तद्दरे र्मम वसन्ति स्थानं हुमिति क्रोधे अंगदः प्राह कलाधिपतिः कः भुवि बिभीषणो लंकेश इति प्र
सिद्धकीर्तिः सुगममन्यत् २८ निजभुजजयनिमित्तं पिपीलिकैः कीटैः प्रकरणार्थोत्र स्पष्ट एव वागर्थः प्रतिपाद्यते किमित्यपूर्तौ रामनाम्ना निजभुजजयेपि शौर्याश्चर्यं

किं कार्यं वद राघवस्य न च किं बद्धः किमंभोनिधिः क्रीडार्थं कपिपोतकैस्तरलं जानात्यसौ मां न हि लंकानाकनिकाय वैरिवसतिं किं वेत्ति वेत्स्ये
यद्दुं को लंकाधिपतिर्बिभीषण इति प्रख्यातकीर्तिर्भुवि २८ रावणः बद्धः सेतुर्यदि जलनिधौ वानरैस्तावता किं नो वल्मीकाः क्षितिधरनिभाः
किं क्रियंते पिपीलैः दग्धा लंका यदपि कपिना स स्वभावः किलाग्नेः शौर्याश्चर्यं निजभुजजये किं कृतं रामनाम्ना २९ अंगदः रामो नाम स ए
व येन भगिनी नासावसापंकिलः खड्गस्ते खरदूषणत्रिशिरसां धौतः शिरः शोणितैः तद्बालांति नितांत बद्धवपुषः संमूर्च्छितस्य ध्रुवं
घ्राणं दर्पमिव स्वसुर्विलुठितं रामः कथं विस्मृतः ३० नकृतं परं तु नदं गैरेव कृतं स तु जगदुद्धरणासक्त इति भावः २९ नामेति प्रसिद्धं स एव येन ते भगि

नी शूर्पणखा तस्याः नासावसापंकिलः लग्नकंदर्मः खरदूषणत्रिशिरसां त्वद्भ्रातॄणां शिरः कृंतनोत्थशोणितधौतो क्रोधातिशयात्तु नः मर्मस्पृशति येन रामेण
संमूर्च्छितस्य पर्यस्तलोचनस्य नव दर्पमिव स्वसुः त्वद्भगिन्याः घ्राणं विलुठितं क्षिप्तं स रामः कथं विस्मृत इति कीदृश्याः स्वसुः तद्बालांति नितांत बद्धवपुषः तद्बा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कांतिसीतासमीपेनित्वातं बद्धं स्थिरीकृतं वपुः ययासातस्याः सीतावदहमप्यत्रोपविशामीतिभावः ३० एतच्छ्रवणापत्रपोरावणस्तदुक्तविस्मरणायान्यदेवा
ह अप्रतर्क्यः महिमायेषांतेप्रसिद्धाः विंशत्याद्याः सदैकत्वेत्यमरः सर्वंसुगमम् ३१ भुजगर्वमपाकरिष्यन्नंगदोनुवदति रेरेरावण कतिकियंतः संतियचं
तुएतान्वक्ष्यमाणलक्षणान् अन्यापराधशूरान् आहत शिलाक्रांतकरादीनपिशुश्रुमः तानेवाह प्राक्पूर्वंकार्तवीर्यस्यनृपतेर्दोर्दंडैः पिंडीकृतं बद्धं अ-

रावणः परिमितमहिमानंक्षुद्रमेनंसमुद्रंक्षितिधरघटनाभिः कोयमुत्तीर्यगर्वः अकलितमहिमानः संतिदुष्प्रापपाराद्शवदनभु
जास्तेविंशतिः सिंधुनाथाः ३१ अंगदः रेरेरावणरावणाः कतिबहूनेतान्वयंशुश्रुमः प्रागेकंकिलकार्तवीर्यनृपतेर्दोर्दंडपिंडीकृतम्
एकंनर्तनदापितान्नकवलंदैत्येंद्रदासीगणैरन्यंवक्तुमपित्रपामहइतित्वंतेषुकोन्योथवा ३२ रावणः भ्रातामेकुंभकर्णः सकलरि
पुकुलव्रातसंहारमूर्तिः पुत्रोमेमेघनादः प्रहसितवदनोयेनबद्धः सुरेंद्रः खड्गोमेचंद्रहासोरणमुखचपलोराक्षसामेसहायाः सोहं
वैदेवशत्रुस्त्रिभुवनविजयीरावणोनामराजा ३३ न्यच्च दैत्येंद्रदासीजनैर्दैत्येंद्रस्यप्रल्हादस्यबलेर्वादासीजनैः तिरस्कृतमितिशेषः बलिनाहारिनि
र्जित्यबद्धः तदाक्षुत्क्षामोजातः तदावरोधागतेदासीजनैर्नर्तनेनदापितमन्नंकवलंयस्मैतमेकं अन्यंवालिकक्षांतर्लीनंपुनर्मत्स्यंकोपरिबद्धंत्रपामहे स्वपितृबल
वर्णनेनलज्जामहे तेषुरावणेषुत्वंकः अथवा एतेभ्योन्यएववा ३२ तेनएवमुक्तोरावणः सापत्रपोभूत्वात्मानंलक्षयति एवंबलमात्मानंउपदिश्यपूर्वपराजयमाक्षिप
ति ३३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नामेतिप्रसिद्धौ कपींद्रहैहयपतीवाल्यर्जुनौस्यातां संभावनाकीदृशौ अवगाढः सर्वातिरेकः अंतरेमध्येस्थेमा बलं ययोस्तौ सर्वातिबलाविति स्थेमातिबलधै
र्ययोरिति हेमी परंतु तस्य दशकंधरस्य प्रतिष्ठापुनः अधुना महतीजाता कस्य धूर्जटेः शंभुः यदंसस्थलीं यस्य स्कंधप्रदेशं स्वेनात्मनैवइभाजिनं गजचर्मन-
स्य पल्लवस्थानि यानिकरचरणादिचर्माणि तेन झटिति शीघ्रमेवास्फोटयत् कीदृशीमंसस्थलीं सद्यः तत्क्षणात्पाटिता रुद्रार्थं कृत्ता ये कंठास्तेषां कीकसस्यये क

स्यातांनामकपींद्रहैहयपती नस्यावगाढांतरस्थेमानौदशकंधरस्य महती स्कंधप्रतिष्ठापुनः सद्यः पाटितकंठकीकसकणाकीर्णांयदंस
स्थलींस्वेनेभाजिनपल्लवेनझटितिप्रास्फोटयद्धूर्जटिः ३४ रावणः सर्वैर्यस्य समंसमेत्यकठिनांवक्षस्थलींसंयुगेनिर्भग्नंमुखमेवदंतमुस
लैरैरावतस्योन्नतैः हेलोत्क्षिप्तमहीध्रपंकजनितत्रासांगनालिंगनप्राप्तानंदहरप्रसादमुदितश्चिंत्यः समेः न्योरिपुः ३५ अंगदः रेरेरा
वणशंभुशैलमथनप्रख्यातवीर्यः कथंरामंयोद्धुमिहेच्छसीदृमखिलंचेत्तन्नयुक्तंतथा रामस्तिष्ठतु लक्ष्मणेनधनुषा रेखा कृता लंघिता
तच्चारेणचलंघितोजलनिधिर्दग्धाहतोक्षःपुरी ३६ णाअस्थिकणास्तैराकीर्णां कीकसंकुल्यमस्थिचेत्यमरः वाल्यर्जुनसमयाद्व्यारूढबलोस्मीत्याश
यः ३४ संयुगेऐरावतस्येंद्रगजस्यसर्वैर्दंताएवमुशलास्तैः समयेकदेवकठिनांमदीयवक्षस्थलींसमेत्यप्राप्य मुखस्याग्रभागमेवनिर्भग्नंखंडितं नतुवक्षस्थलीति एवं
सोहमिति कर्मांतरमाह सोहंहेलयाप्रयत्नेवक्षिप्तः योमहीध्रः कैलासस्तस्माद्यः कंपस्तेनजनितस्त्रासोयस्याः एवंभूतायाः अंगनायाः पार्वत्याः आलिंगनेनप्रा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्तानं दोर्योर्हरस्तस्य प्रसादेन मुदितस्तस्य मे अन्योरामादन्यतरोरिपुश्चिंत्यः ननु वर्तमानोस्तीति ३५ अखिलं पूर्णं बलेनेति लक्ष्मणेन धनुषा कृता या रेखा सापि लंघ्या
नलंघिता तच्चारेण रामदूतेन हनुमता ३६ हे अंगद यत्त्वं मां प्रचूर्णितबलं वदसि तत्पूर्यताम् रामादधिकबलोस्मीति भावः काकाक्षिन्यायेनालमोयोजनं सर्वत्र
सदैव हेमोक्षोहिरण्याक्षः तदादीन् दैत्येश्वरान् प्रतिबलेयाकथा सा महाबाहुसारा दलं पूर्यताम् महाबाहुबललेशस्तेष्वस्तीति भावः अथानंतरं शेषस्य हिरण्यकशिपोः

रावणः यन्मां त्वं वदसि प्रचूर्णितबलान् हेमाक्षदैत्येश्वरांच्छेषस्याप्यथवा हिरण्यकशिपोर्भस्मांगदस्यांगद अन्येषाममरद्विषां बलक
थामहाबाहुसारादलं रामश्चेद्रिपुहा प्रियापहरणे संधिं विधत्ते कथं ३७ अंगदः शिरोभिर्मा देवीः शिवइव न ते दास्यति पुनः प्रबंधं पश्याब्धेः
सरसइव कैलास सुभट हितं तु ब्रूमस्त्वां मम जनकदोर्दंडविजयस्फुरत्कीर्तिस्तंभ स्त्यज कमलबंधोः कुलवधूं ३८ रावणः कस्त्वं वालितनूद्भवो रघुपतेर्दूतः सवालीति कः कोवावानर राघवः समुचितातेवालिनोविस्मृतिः त्वां बध्वा चतुरंबुराशिषु परिभ्राम्यन्मुहूर्तेन यः संध्या
मर्चयतिस्मनिस्त्रपकथं तातस्त्वयाविस्मृतः ३९ भस्मांगदनाम्नो दैत्यस्य अन्येषाममरद्विषामन्येषां च बलकथा महाबाहुसारादलं पूर्यताम् स्वर्णांगदस्येतिपा
ठे स्वर्णं तस्यांगदे बाहुभूषणे यस्य हिरण्यकशिपोरिति हिरण्याक्षादिभ्योप्यहमेव बलीत्यभिप्रायः अन्यत्सुगमम् ३७ हे कैलाससुभट एतन्द्धरणपौरुष वयं तु अनस्त्वां
प्रति हितं ब्रूमः शिरोभिर्मस्तकैः मा देवीर्मा क्रीड शिवइव पुनः रामस्ते शिरांसि न दास्यति यथा शिवार्थे भवतैव कृत्तानि शिरांसि शिवः पुनस्तुभ्यमदात् न तथा राम



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इति अब्धेः प्रबंधं प्रकृष्टं बंधनं यस्य कस्येव सरसइव कुतो हितं ब्रूमः यतस्त्वं मदीयपितृभुजस्य जंगमः कीर्तिस्तंभः यत्र यत्र त्वं प्रयासि तत्र तत्र वालिना बद्धोयमिति
कीर्तिस्तंभः ननु किं हितं वदसि तदाह कमलबंधोः सूर्यस्य कुलवधूं सीतां त्यजेति ३८ ३९ रे वानराधम अतिकटुप्रलापी त्वं क इत्यपेक्षायामाह तत्र स्वामिपि
त्रोरात्मैश्वर्यं दर्शयति रे रक्षः अहं राघवस्य दूतोस्मि किंभूतस्य दोर्दंडानां प्रचंडं यत् प्रतिहननं बलहारित्वं तस्य विधौ विधाने प्रौढं सगर्वं यत् बाह्वोः सहस्रं

अंगदः त्वद्दोर्दंडप्रचंडप्रतिहननविधिप्रौढबाह्वोः सहस्रच्छेदक्रीडाप्रवीणस्थिरपरशुमहागर्वनिर्वापकस्य दूतोहं राघवस्य त्वद
पघनघृणावासवालाग्रलोम्नः पुत्रः सुत्रामसूनोः प्लवगबलपतेर्नामतश्चांगदोहं ४० रावणः यद्भग्नाः किल बालतालतरवो रामेण
सार्द्रत्वचश्छिन्नं यच्च पुरातनं शिवधनुस्तद्वीर्यमुद्दिश्यते नासीदेतदनागतं श्रुतिपथं स्वर्लोकधूमध्वजः पौलस्त्यः करकंदुकीकृतह
रक्रीडाचलो रावणः ४१ तस्य छेद एव क्रीडा तस्यां प्रवीणः स्थिरोतिधीरो यः परशुर्जामदग्न्यस्तस्य यो महान् गर्वस्तस्य निर्वापकस्य शामकस्य -
त्वद्भुजजयिहैहयभुजसहस्रछेतृपरशुरामजयिन इति ध्वनिः पुनः सुत्रामसूनोरिंद्रात्मजस्य वालिनः पुत्रोस्मि किंभूतस्य वालिनः त्वदपघनं त्वच्छरीरं तत्र
या घृणा करुणा तया त्वदावासाय कृतानि पुच्छवालाग्रलोमानि येन तस्य त्वां कक्षागतं कृत्वा भुवं भ्रांत्वा यदागतस्तदा गतसंज्ञं त्वां ज्ञात्वा दत्त्वा वालाग्रलोम-
सु विश्रमितवान् तस्य पुत्रोहमिति ४० ४१ नोस्माकं श्रोतृपथेषु कर्णमार्गेषु कति कियंतः शूराः पदं स्थानं चक्रिरे श्रुता इति नो इति पाठे कियंतः कियं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तोवीराः पदंनोचक्रिरे अपितु सर्वएवचक्रिरेइतितेषामपिसमलंमार्गम् किंविशिष्टाः शूराः प्राञ्चः शौर्यपूज्याः कोलंकाभटइत्यपेक्षायामाह यद्दोर्मं
डलेति शंकरगिरेः कैलासस्य धातवोगैरिकादयस्तद्द्रवाअवयवाः अद्यापियस्यदोर्मंडलेनगाढाक्रमणवशान्निः स्पंदंनिःसृतंयद्रक्तंतस्ययाश्छटाः प्रवाहास्ते
षामाशांकामंपूरयंतिजनयंति ४२ तस्मैरावणायकः पुमान्वैरायतेनकोपीति यः अस्खलितेनाव्यग्रेणचित्तेन तदधिकंपूर्वतोप्यधिकंयथास्यात्तथाब्र-

रावणः शूराः श्रोत्रपथेषुनः कतिकतिप्राञ्चः पदंचक्रिरेतेषामेवविलंघ्यसाम्यसरणींजागर्तिलंकाभटः यद्दोर्मंडलगाढपी
डनवशान्निस्पंदरक्तच्छटाः शंकामंकुरयंतिशंकरगिरेरद्यापिधातुद्रवाः ४२ स्वेषूत्कृत्यहुतेषुमूर्द्धसुजवादग्नेः स्फुरित्वाबहिर्व्या-
कीर्णेष्वलिकेषुदैवलिखितंदृष्ट्वापिरामार्पणम् चित्तेनास्खलितेनयस्तदधिकंब्रह्माणमप्रीणयत्तस्मैकः प्रथमाययमानिषुम-
हावीरायवैरायते ४३ वीरोसौकिमुवर्ण्यतेदशमुखश्छिन्नैः शिरोभिः स्वयंयः पूजार्थसमुत्सुकोघटयितुंदेवस्यखट्वांगिनः सूत्रार्थी
हरकंठसूत्रभुजगव्याकर्षणायोद्यतः साटोपंप्रमथैः कृतंभ्रुकुटिभिः स्थित्वांतरेवारितः ४४

ह्माणंप्रजापतिंरुद्रंवाप्रीणयत् उभयोः सृष्टि
कारित्वात् ब्रह्मत्वंकिंकृत्वास्वेषुअखिलेषुमूर्धसु अग्नेः सकाशात् स्फुरित्वा बहिरपिकुंडाद्बहिर्भागेव्याकीर्णेषुसमंताद्विक्षिप्तेषु सत्सु दैवलिखितंरामार्पणं
रामायार्पणंरामादस्यकालोभविष्यतीतिदृष्ट्वा अर्पणंकालवासयोरितिहेमी किंभूतेषुमूर्धसु जवात्उत्कृत्यकंठादुत्पाट्यहुतेषु ४३ खट्वांगोनरमंजरीत्यमरः



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सास्यास्तीति खट्वांगी रुद्रस्तस्य स्वयंछिन्नैः शिरोभिः पूजार्थे समुत्सुकः पुनः सूत्रार्थे सूत्रप्रयोजनं घटयितुं कर्तुं हरकंठेभ्यः सूत्राकारो भुजगस्तदाकर्षणायो
द्यतः प्रमथै रुद्रगणैः साटोपं हास्ययुक्तं नर्तनं साटोपं हास्यनर्तनमिति कृतम् अंतरे रुद्ररावणयोरंतराले स्थित्वा यैर्वारितः कंठसर्पमा गृहाणेति असौ रावणः किं
वर्ण्यते शिरः पुष्पमालार्थं कंठभूषणाकर्षणमिति भावः ४४ प्रकरणार्थस्तु स्पष्ट एव अथ वागर्थः प्रतिपाद्यते परमभक्तो हनूमान् आगतान् ब्रह्मादीन् भक्तिं बोधय
ति हे ब्रह्मन् एष रामः अध्ययनस्य अध्यापनेन वेदादिना समयः सम्यगयतीति समयो विषयः न अतः बहिर्देशेन तूष्णीं स्थीयतां यद्दृश्यं तद्रामेन यतो वाचो निवर्तंते

अत्रांतरे प्रविश्य प्रतीहारः ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः
स्तोत्रं संहर नारद स्तुतिकथालापैरलं तुंबरो सीतारल्लकभल्लभग्नतद्दर्पः स्वस्थो न लंकेश्वरः ४५

अप्राप्य मनसा सहेत्युक्तत्वात् हे अजडम
ते बृहस्पते स्वल्पं यथा स्यात्तथा स्तोत्रं जल्प वद एषा वज्रिणो रामस्य सभा भक्तगोष्ठी कीदृशं स्तोत्रं संहारः प्रलयः नारदः नयंते विषयैर्विक्षिप्यंते नराः प्राणिनस्ते
षां समूहो नारं तं ददाति प्रकटयतीति नारदः सृष्टिसमयः पालितैः पालकतया स्तूयते यस्यां सा स्तुतिः पालनाख्या संहारसृष्टिपालनात्मककथालापैर्नालं किंतु न
पूर्णं हे तुंबर आख्य गंधर्व अत्रेकारप्रश्लेषः एङोपदइति सूत्रेण ईश्वरो रामः लंकेश्वरेण अरल्लकः शिरः सिंदूरसरणिः स एव भल्लकस्तेन भग्नो रावणस्तस्य तत् तन्नाशको स्ति
तर्हि भयजनकः किन्नेत्याह अयः शुभावहो विधिः भक्तजनमंगलं करोतीत्यर्थः ननु सीतार्थं रावणघातात् किं कामीनेत्याह स्वस्थः सदा स्वरूप इत्यर्थः प्रकरणार्थः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अवगम्यते शिरः सिंदूरसरणिः स्त्रीणांवैरल्लकः स्मृतइतिहलायुधः ४५ हेरावण अतिरुषातिप्रचंडकोपेनांगदस्त्वामपिकिमर्थैवनहन्यात् अपितुहन्यादेवप रंत्वहननेहेतुरयमस्तितदाह तातकक्षावशिष्टोसि यस्तातेनानुकंपयासक्तस्त्वमहं नहन्मीति अहमपिप्रोद्धृत्योद्धृत्यउच्चैरुत्क्षिप्योत्क्षिप्यपादाभ्यांप्रहतानिताडि तानिशिरांस्येवकंदुकास्तैः क्रीडतोपादप्रहतानिबाणैर्नहंतव्यानिइति अतोहं स्वक्रीडनकभंजनेनलोकापवादभयान्नहन्मीतिभावः ननुस्वामिद्रोहहंतव्यए

अंगदः क्रोधंनाटयति स्फूर्जद्दिव्यास्त्रबाहुव्यतिकरविगलत्कंधरैस्तैः शिरोभिर्देवोरामः करिष्यत्युचितबलिमयंभूत संघातशास्ता हन्यात्किंनांगदस्त्वामितिपरुषरुषातातकक्षावशिष्टः प्रोद्धृत्योद्धृत्यपादप्रहतबहुशिरः कंदुकैः क्रीडितोस्मि ४६ अस्तिमत्स्यस्तिमिर्नामशतयोजनविस्तरः तिमिंगिलगिलोप्यस्तितद्गिलोप्यस्तिराघवः ४७

वेतिचेत्तत्राह देवोरामः तेशिरोभिः उचितबलिंकरणीयदिक्पालबलिंकरिष्यत्यतोनाहंहन्मि किंभूतैः स्फूर्जंतिदिव्यास्त्राणियत्रतस्यबाहोरामभु- जस्ययोव्यतिकरः कोपस्तेनविगलंत्यः कंधराः येषांतैः ननुबलिप्रदानेनास्यकिंभविष्यतितत्राह भूतानांसंघातंसमूहंशासितुंशीलंयस्यसः अन्यादपिब लिदानक्रियायांशिक्षयितुमितिभावः ४६ अप्यर्थगौरवेणरावणंरामंस्मारयति अस्तीतिसुगमम् ४७ मूर्धाकर्तनसाहसेनदोष्णांभारोद्धरणगर्वेणय- स्त्वंनगरीरक्षणंकर्तुमर्हसिचेत्तत्राह हेरावण एषांमूर्धमस्तकानांचपुनः दोष्णांविंशतिभुजानांचफलमिदंभारोद्धरणंचेति तदेवफलंद्योतयति उ-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धृत्य स्कंधाउत्पाद्य कृत्ताः खंडिताः अविरलाः निबिडाः गलाः कंठास्तेभ्यो गलद्यद्रक्तं तस्य प्रभूताप्रचुरायाधारा तयाधौतौ प्रक्षालितौ ईशस्य रुद्रस्यां
घ्रीतयोः प्रसादेनोपनतः प्राप्तो योजयस्तेन जगति ज्ञातः मिथ्यैवमिह्मायेषांमूर्ध्नां किंभूतांनां दोष्णां कैलासस्य गिरेर्याउल्लासनेच्छा तदुद्धरणेच्छा तस्याः
योव्यतिकर अशौर्येशौर्यारोपः तस्यपिशुनः सूचकोयः उत्सर्पीप्रसारणशीलोदर्पस्तेनोद्धुराणांप्रचंडानां एवंभूतानांमूर्ध्नांदोष्णांच फलं इदमेव शिरः कर्तनं साहसं

मूर्ध्नामुद्धृत्य कृत्ताविरलगलगलद्रक्तसंभूतधाराधौतेशांघ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् कैलासोल्लासनेच्छाव्य
तिकरपिशुनोत्सर्पिदर्पोद्धुराणां दोष्णां चैषामिदंते फलमिह नगरीरक्षणे यत्प्रयासः ४८ सीतां मुंच भज स्व रामचरणं राज्यं चिरां कुरुष्व
तां देवाः संतु हविर्भुजः परिभवं मायातु लंकापुरी नोचेद्वानरवाहिनीपतिमहाचंचच्चपेटोत्तरैस्तत्तन्मुष्टिभिरंगसंगरगतस्तत्त
त्फलं लप्स्यसे ४९ दृष्टः किं रघुनंदनो नहि पुरा किं चत्वयानः श्रुतो रण्येऽकिं न विलंबितोसि न पुनर्मार्गेस्थितोसि क्षणं तल्लंकेश्वरमुं
चमानमखिलं श्रुत्वा वधं वालिनः सीतामर्पय रक्ष राक्षसकुलं दासत्वमंगीकुरु ५० भारोद्वहनप्रौढिश्चेति इह मदागमने यन्नगरीरक्षणं फ

लं स प्रयासः श्रम एवेतिभावः ४८ वानराणां वाहिनीपतयो हनूमदादयस्तेषां महांतः चंचंतः पेशलाः येचपेटाः करतलप्रहारास्तेषामुत्तरैरुपर्युपरिकं
दुकवद्वृत्तिभिर्मुष्टिभिः तत्तत्फलं तस्यतस्यानयस्य फलं लप्स्यसे प्राप्स्यसि ४९ ५० ५ ५ ५ ५

भोंगद त्वंस्मरसि अयंमल्लक्ष्मणोदशमुखः वीरः कथमासीत् एतदेववीरत्वंबोधयति किंकुर्वन् देवद्रीचींदेवानंचतिगच्छतिपूजयतिवा देवद्रीचीतांदेवश्रियं
प्रसभंयथास्यात्तथानिजभुजाएववनंतत्रोद्दामकरिणींमत्तमतंगजींकुर्वन्सन् देवानंचतिदेवद्र्यङित्यमरः यथागजीवनमाश्रयतितथेयंनिसर्गोदग्रेण
स्वभावादुन्नतेनोरसापीतगगनः आश्लिष्टाकाशः कीदृशेनोरसामरुत्वानिंद्रस्तस्यदंभोलिर्वज्रंतेनयोक्षणः योगस्तेन घटितोनिर्मितः घोरश्चयथुःशो

क्षेपकः रावणः मरुत्वदंभोलिक्षणघटितघोरश्वयथुनानिसर्गोदग्रेणप्रसभमुरसापीतगगनः श्रियंदेवद्रीचींनिजभुज
वनोद्दामकरणीमयंकुर्वन्वीरः स्मरसिकथमासीद्दशमुखः ५१ आस्कंधादपिकंठकांडविपिनेद्राक्चंद्रहासासिना छेत्तुंप्रक्र
मितेमयैवझटितित्रुट्यच्छिरःसंततौ अस्मेरंगलिताश्रुगद्गदवचोभग्नभ्रुवायद्यभूद्वक्त्रेष्वेकमपिस्वयंसभगवांस्तन्मेप्रमाणं
शिवः ५२

थोयत्रतेनवज्रादपिशोथमात्रयुक्तंनक्षतम् ५१ पुनरात्मनोरौद्ररसावेशमाविःकरोति आस्कंधादितिस्कंधमभिव्याप्य कंठाएवकां
डाः वृक्षस्कंधास्तेषांविपिनेदशशिरोरूपेमयैवचंद्रहासासिनाच्छेत्तुंप्रक्रमितेकर्तनंप्रापितेसति कीदृशे झटितिशीघ्रंत्रुट्यतीशिरःसंततिः शिरोनाडीप
रंपरायस्य एवंसतिदशसुवक्त्रेषुएकमपिवक्त्रंमुखंयदि अस्मेरंस्मितरहितंगलिताश्रुत्यक्ताश्रुवागद्गदवचोवाभग्नभ्रुभग्नावक्राभ्रूर्यत्रतत् अभूज्जातंतं
त्तत्रशिवः स्वयमेवप्रमाणंसाक्षी एतेनातिरभसोद्योतितः गद्गदोभयहर्षाभ्यांअत्रभयात् वयमेतादृशाः शूराः शिरसांकर्तनेछेदेपिनकातराइतिभावः ५२



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

येमूर्धानः अहंपूर्विकया अहंपूर्वमहंपूर्वमित्यहंपूर्विकामनेतिप्रहारमभजन् पुरारेरुद्रस्यभूमौपतिताः संतः तेमौलयः पुनः ममनवभवान्मूर्ध्नः अवलोक्य
इतिप्रीत्याट्टहासंव्यधुः कृतवंतः इतिकिंइमेनवभवंरुद्रं वरंयाचिष्यंतेवयंनेति एवंभूतः साहसिकोहमितिभावः सभयामर्षः पुनः पुनस्तदेवप्रलपतीतिविज्ञे
यम् ५३ अद्भुतोयोसाहसस्तस्मिन्नेकोरसोयस्यसः एवंभूतोरावणः कैर्नस्तुतः अपितुसर्वैरेव द्युसद्भिः स्रजिमालायांसन्निवेशोयेषांतैः शिरःपुष्पैः शिरां-

येहंपूर्विकयाप्रहारमभजन्मांछिंधि मांछिंधि मांछिंधीत्युक्तिपराः पुरारिपुरतो लंकापतेर्मौलयः नेभूमौपतिताः पुनर्नवभवानालोक्य
मूर्ध्नोपरान्याचिष्यंतइमेहिनोवयमितिप्रीत्याट्टहासंव्यधुः ५३ मूलेपंचततश्चतुष्टयमितिस्रक्सन्निवेशैः शिरःपुष्पैरन्यतमावलोक
नमितैरुच्छोणितैरंचति हस्तस्पर्शवशेनमूर्ध्निदशमंमूर्धानमालोकयन्शंभोरद्भुतसाहसैकरसिकः कैर्नस्तुतोरावणः ५४ लंकेंद्रःस
मधीरवीरपदवीरम्योनगम्योगिरांतस्मिन्नुज्ज्वलतिचंद्रहासशकलान्मौलीन्पुरारेःपुरः भीत्यामंदशिखोदयोपिदहनस्तैरेवतत्क्षणांप्रा
णार्थेश्वदिदृक्षयातनुतनुश्वासानिलैर्दीपितः ५५ स्रेवपुष्पाणितैः शंभोः रुद्रस्यमूर्ध्निअंचतिसति हस्तस्पर्शवशेनइतिदशमंमूर्धानंस्वकीयमालो
कयन्इतिकिंमूलेपंचशिरांसि ततअग्रेचतुष्टयंशिरस्सुतुष्कम् अतश्चतुष्टयेपंचमंशिरोमृग्यतेइति कीदृशैः अन्यतमोदशमस्तदवलोकनमितैः प्राप्तैः यथंनवैवद
शमः कुत्रेतिपुनःपुनः उच्छोणितैः उद्गलद्रक्तैः ५४ एषः लंकेंद्रोरावणः समाश्रितेधीराश्चसाधारणधीराणांमध्येयेवीराधीरत्वेनोत्कटास्तेषांपदव्यांमार्गेरम्यःस्व

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हणीयः धीरावीरा अपि यं स्पृहयंति गिरिस्त्रिकूटाख्यः रम्यो न दुर्गवर्त्मनास्य वीरत्वमिति न तस्मिन् रावणे पुरारेः रुद्रस्य पुरः अग्रे चंद्रहासकृतखंडान्मौलीन्जु
हृतिसति दहनोग्निर्भीत्या रावणशिरांसि कथं दहेयमिति भीत्या मंदशिखोदयः पुनः तैरेव प्राणाद्यैरिंद्रियगणैर्दिदृक्षया कथमेतानि शिरांसि आत्मानं दाहयंतीति
ज्ञाने क्षयामंदं मंदं श्वासानिलैर्दीपितः इंद्रियाणां क्षणं निराश्रयावस्थानत्वात्तैरेव कृत्तशिरः संचारं कृत्वाग्निरुद्दीपित इति भावः ५५ रावणस्य विक्रमद्वयम
स्ति मस्तकहोमः कैलासोद्धरणं चेति तद्द्वयं निराकरोति आस्तामिति सर्वं सुगमम् ५६ तदधिसंधिं ज्ञात्वा जिगमिषुरंगदो रामवीर्यं स्मारयति दोर्दंडेति पो-

अंगदः सावज्ञम् आस्तां मस्तकहोमविक्रमकथा पौलस्त्यविस्तारिणी दहं किन्न निपातयं निदहने वैधव्यभीताः स्त्रियः कैला
सोद्धरणेन भारवहनप्रौढिरूपया विष्कृता तूर्णं वर्णय किंचकिंचिदपरं यत्पौरुषस्यास्पदं ५६ दोर्दंडाहितपौत्रभिक्षुरभवद्यस्मिन्पुलस्त्यो
मुनिस्तद्बाह्वोर्वनमाच्छिनत्परशुना यो राजबीजांतकः शौर्यं शौर्यरसांबुधेर्भृगुपतेर्ग्रासोपि नासीज्जलं तत्तेजो वडवानलस्य किमसौ
लंकापतिः पल्वलम् ५७

राजबीजांतकः क्षत्रसंतानसंहर्ता जामदग्न्यः परशुना कुठारेण यद्बाहुवनं यस्य राज्ञः भुजवनं अच्छिनत् अलुनात् बाह्वो
र्वनमिति निपातः सिद्धः कामधेनौ तस्य कस्य यस्मिन् राजन्यर्जुने पुलस्त्यो मुनिर्दंडस्याहितः प्रापितः बद्धो यः पौत्रो विश्रवस्सुतो रावणस्तन्मोचनाय भिक्षुरभवत् पौ
त्रजीवनदानभिक्षां याचितवानिति तस्य शौर्यरसांबुधेर्वीररससागरस्य भृगुपतेः शौर्यमेव जलं तत्तेजो वडवानलस्य रामप्रतापवडवाग्नेः ग्रासश्चुलकमात्रमपि-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नासीत् असौ पल्वलमल्पसरः लंकापतिः किंनकिमपीति एतदंतरं त्वद्रामशौर्ययोरितिभावः ५७ एवंरामवीर्यमाश्राव्यतदनुगवीर्यंश्रावयति रेरे राक्षसेति वानरभर्तुः सुग्रीवस्यउद्दण्डायोद्धारोयेवानरास्तेषांभुजा एवस्तंभाग्र्याः मुख्यस्तंभास्तैर्भयावहां अन्यत्सुगमम् ५८ इतिश्रीमिश्रमोहनदासविरचितायांहनु मन्नाटकटीकायामष्टमोंऽकः ८ कटकोस्त्रीनितंबोद्रेरित्यमरः सुवेलाख्यगिरिनितंबप्रदेशे साटोपंयथास्यात्तथा लंकापतेरर्धैंकराः दशहस्ताः धनुष्टं

रेरे राक्षसराजमुंच सहसादेवीमिमांमैथिलींमिथ्याकिंनिजपौरुषस्य घटनाप्रागल्भ्यमारभ्यते एनांपश्यसिकिंनकिन्नरगणैरुद्गीत दोर्विक्रमां सेनांवानरभर्त्तुरुद्धटभुजस्तंभाग्र्यभीमांपुरः ५८ इतिलंकाभटमुत्कटवाक्यैरधिक्षिप्यलंकामातंकयन्नंगदोनिष्क्रांतः इतिश्रीहनुमन्नाटकेअष्टमोंकः ८ अथनिजप्रतापप्रचंडचंडसमरोत्साहपरिपूर्णस्यलंकापतेः श्रुत्वादाशरथिः सुवेलकटकेसा टोपमर्द्धैर्धनुष्टंकारैः परिपूरयंतिककुभः प्रोच्छंतिकौक्षेपकान् अभ्यस्यंतितथैवचित्रफलकैर्लंकापतेस्तत्पुनर्वैदेहीकुचपत्रवल्लि रचनावैदग्ध्यमर्धैकराः १

कारैः ककुभः परिपूरयंति तथा कौक्षिप्यंतेइति कौक्षेपकाः बाणास्तान् प्रोच्छंति विमलीकुर्वंति पुनरर्धैकराः चित्रफलकैः चि त्राकृतिभिस्तत्प्रसिद्धं वैदेहीकुचपत्रवल्लिरचनावैदग्ध्यं अभ्यस्यंति अथवागर्थः प्रतिपाद्यते करः कीनाशवानरहस्तयोरिति हैमी अर्धैकराः अर्धवानराः श्रु त्वासंस्थाप्यश्रुकुनिष्ठायामितिकामधेनौ पूर्वार्द्धः पूर्ववदन्ये चित्रफलकैः चित्रितभल्लैः फलमाकृतिभल्लयोरिति हैमी लंकापतेः कुचपत्रवल्लिरचनावैदग्ध्यंकुर्वन्

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कुचसंकोचेइतिकामधेनौ रावणस्यसंकोचायवैपत्रवल्लिरचनाचंदनमालानिर्मितवैदग्ध्यम् यथाचंदनमालयामंडपादिरवरुध्यते तथास्यरोधनविधानमिति
प्राण्युत्साहोतुदेहिनावितिशाश्वतः लक्ष्मीरीकारउच्यतेइत्येकाक्षरी रावणोत्साहशोभासंकोचायपत्रवल्लिरचनावैदग्ध्यमिति वैनिश्चयेन १ एषःपुरा
लंकायांविकृतिंदाहरूपांकुतोज्ञातमित्यतआह दग्धाग्रपुच्छः एषःकपिःप्रतिभातितदीयःसुतःवालिपुत्रःकथंज्ञातइत्यतआह वालिसदृशइति शरधनु-

ततोनिजराजमंदिरशिखरस्थमंचमारुह्य लंकायांकृतवानयंहिविकृतिंदग्धाग्रपुच्छःपुराकोप्येषःप्रतिभातिवालिस
दृशोनूनंतदीयःसुतः श्यामःकामसमाकृतिःशरधनुर्धारीससीताप्रियःप्रत्येकंरिपुमैक्षतीतिनिगदन्मंचस्थितोरावणः २
तत्रमंदोदरी दृष्ट्वाराघवमेवराक्षसवनस्वच्छंददावानलंजानक्यांनिजवल्लभस्यपरमंप्रेमाणमालोक्यच कांक्षंतीमुहुरात्म
पक्षविजयंभंगंचमुग्धामुहुर्धावंतीमुहुरंतरालपतितामंदोदरीसुंदरी ३

धारीकः सीताप्रियः प्रत्येकंरिपुमैक्षतीतिनिगदन्निति स्वयमेववितर्क्यनिगदन्सन् रावणईक्षतीतिज्ञेयम् २ राघवमेवेत्येवपदेनासहायत्वंद्योतितम् मुहुः
आत्मपक्षविजयंकांक्षंतीचकारान्मुहुः परपक्षभंगंकांक्षंतीमुहुर्धावंती अंतरालपतिता आसीदितिशेषः अतएवमुग्धाज्ञादेवमजानतीत्यर्थः कदाचि
दूहेकदाचिद्रावणाभ्याशे एषएवांतरालः एकत्रस्थित्यभावादिति ३ ५ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धावनमेवद्योतयति इयंमंदोदरी आत्मचरणारविंदगतरेणूत्करान् कर्करतामनैषीत् प्रापयामास किंविशिष्टान् वंदारूरभिवादकेइत्यमरः वंदारूण्यभिवादकानि
यानिवृंदारकवृंदानिदेवसमूहास्तेषांयाबंदीरुद्धस्त्रीगणास्तच्छिरःस्थितायामंदारमालापारिजातपुष्पस्रक् तस्यामकरंदबिंदवोयेषुमंकरंदरेणुयोगात्क
र्करत्वम् यच्चरणारविंदेतिपाठेयस्यरावणस्यचरणारविंदेये रेणूत्करास्तान्वृंदारकाणांबंदीरुद्धदेवगणानांचरणपीडनान् मकरंदबिंदवः मंदोदरीधावना-
द्रेणवः ४ मंदोदरीलंकायांतत्रापिमंदिरेतत्रापिरहसीतिवचनमुवाच तदेवाह हेदेवकांतत्वमिति अवेत्य ज्ञात्वा रणधीः रणोत्कटधीः तथापिवालिजितल

वंदारुवृंदारकवृंदबंदिमंदारमालामकरंदबिंदून् मंदोदरीयच्चरणारविंदरेणूत्करान्कर्करतामनैषीत् ४ अंजलिंबध्वामंदो
दरीरावणंवैरिविद्रावणंविज्ञापयति देव लंबाहूल्लूतचंद्रशेखरगिरिर्भ्राताजगद्भक्षकः पुत्रः शक्रजयीत्यवेत्यरणधीर्नूनंब
लीवालिजित् तद्राजन्बलाबलादपत्तनादेयास्यसाजानकीलंकायांरहसीत्युवाचवचनंमंदोदरीमंदिरे ५

ह्रिपक्षः वालिजेता रामोबलीतिसगर्भाक्षेपः इतिकिंबाहूल्लूतरुद्रालयोहंजगद्भक्षकोभ्राताइंद्रविजयीपुत्रइति तत्तस्मात्पूर्वंसैवाबलात तोपिवनाच्छला
दपत्हतानप्रत्यक्षंअतोरामायदेयेत्यभिप्रायः ५ हेभीरुभयशीले तेभियाकिंनकिमपातिराक्षसाधीशस्यमे असौरामोमहान्रिपुर्नयस्यममाग्रेअस्यत
पस्विनः रामस्यप्राणान् सुगमम् तमेवाह असौनापुमान्रामः महान् रिपुरस्ति रामस्याग्रेमद्भुजमंडलोधनूत्नुः ततः प्रेरिताः अस्यतपस्विनः रिपुघातिनोरा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मस्यमार्गणा मम प्राणान्नेष्यंति अतोभियाकिमितीत्यवगम्य ६ एकः असहायः तत्रापिसुग्रीवभृत्यः रामभृत्यभृत्यइति पत्तनंनगरं वनंदग्ध्वातूष्णींगतवा न्यागाडंबरंयथास्यात्तथायातः गतः तदाभवतोवीरवर्गैः वस्तुतस्त्वयापि किंकृतंनकिमपीति असौरामः सुगमम् ७ शिबिरंकटकं ८ संप्रतिविपत्काले

रावणः निजभुजाडंबरंनाटयति किंतेभीरुभियानिशाचरपतेर्नासौरिपुर्मेमहान्यस्याग्रेसमरोद्यतस्यनसुराप्तिष्ठंतिशक्राद यः महोद्दंडकमंडलोद्धृतधनुःक्षिप्ताःक्षणान्मार्गणाः प्राणानस्यतपस्विनःसनिरणेनेष्यंतिपश्याधुना ६ मंदोदरीसभयं राव णोदितपद्यार्थमपश्यतीभाविनाद्वितीयंपद्यार्थमवगम्य अहोप्राणनाथलंकेश्वरकिमितिस्वकपोलकल्पितैरमंगलालापैराक्षनो वधंमन्यसे शांतंपापंप्रतिहतममंगलमितिवैचित्र्यमुत्पाद्य एकःसुग्रीवभृत्यः कपिरखिलवनंपत्तनंचापिदग्ध्वायातस्तूष्णींतदानींद शमुखभवनः किंकृतंवीरवर्गैः प्राप्तोसौपत्तनांतंसकलकपिबलैर्वार्द्धिमुल्लंघ्यरोद्धुं त्वसौतांमुंचमुंचेत्यनिशमकथयत्प्रेयसीरावणस्य ७ मंदोदरीकथनेनकिंचित्सभयोरावणः शुकंचसारणंवीरंदूतंप्रस्थाप्यरावणः रामदेवस्यशिबिरंमंत्रंचक्रेऽथमंत्रिभिः ८ तत्रवि रूपाक्षनामामंत्रीसहितं देवत्वांप्रतिसंप्रतिप्रतिभटप्रोल्लासनंनोमुदेदेवायंप्रतिपद्यतेहितमिदंयस्माद्वयंमंत्रिणः ९



प्रतिभटाः शत्रवस्तान् प्रतिप्रोल्लासनंयुद्धाय परप्रेरणंनोस्माकंमुदेनअमुत्रह्या नादिहापयशः परत्रनिरयावहंचेतितत्रबलाबलाख्यानेनहितमेवद्योतय

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नि सीतेत्यबलत्वं हेलोल्लंघितेतिबलवत्त्वं अन्यत्सुगमं ९ ननु रामं परीक्ष्य दास्यामीति चेन्न अद्यैव वैदेहीत्याशयेनाह यावदिति पश्यसीति प्रत्येकमनुबध्यते नि रस्ता अलंकारा राक्षस्योयस्यां निजानुजं बिभीषणं सुमंत्रोपदेशकर्तृत्वात्सुचरितमित्युक्तं ननु यावज्जीवं तामनुभवामि ततो न मुंचामीति चेन्न अनघां निष्पापां

सीतारक्षणदक्षलक्ष्मणधनुर्लेखापिनोल्लंघिता हेलोल्लंघितवारिधिः कपिकुलैः सार्द्धं स रामो महान् ९ यावद्दाशरथेर्न पश्यसि मुखं यावन्न पाथोनिधिं बद्धं यावदिमां न पावकवशां लंकां निरस्तालंकाराम् यावन्नैव निजानुजं सुचरितं यातं कुलांगारतां तावद्रावणलोकपा लतरसा सीतां प्रयच्छानघाम् १० रावणः साश्चर्यं एते ते मम बाहवः सुरपतेर्दोर्दंडकंडूहराः सोहं सर्वजगत्सराभवकरो लंकेश्वरो राव णः सेतुं बद्धमिमं शृणोमि कपिभिः पश्यामि लंकां वृतां जीवद्भिर्न हि दृश्यते किमथवा किं वा न वा श्रूयते ११ विरूपाक्षः राजन्विषादं मागाः पश्य आज्ञा शक्रशिरोमणिप्रणयिनी शास्त्रग्रहाणामपि भक्तिर्भूतपतौ पिनाकिनि पदं लंकेति दिव्या पुरी संभूतिर्द्रुहिणान्व येचतदहो नेदृग्वरो लभ्यते स्याच्चेदेष न रावणः क्व नु पुनस्त्वेकत्र सर्वे गुणाः १२

१० एते इति जीवद्भिः चिरशरीरधारणावद्भिः अथवाद र्शनाभावे किं न श्रूयते हाहा इत्यार्थे वाद्ययं वा कष्टं कष्टं हंत हा वावता समा इति हैमी ११ आज्ञेति शक्रशिरोमणिः मुकुटोपरि मणिवत् भासमाना शस्त्रग्रहा णां ये बलेन शस्त्रग्राहिणस्तेषामपि प्रणयिनी सादरं ग्राह्या तवाज्ञा लंकेति पदं वासस्थानं द्रुहिणो ब्रह्मा तदन्वये ब्रह्मपौत्रविश्रवसः संभूतिर्जन्म १२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मतिरिति शास्त्रविचारसमुत्थंनिर्धारणमार्थतोमतिर्मताविबुधैरितिरसोदधौ विपश्चितांज्ञानिनांविलासिनां कामिनांमानिनांचित्तोन्नतिमतां असि
वल्लरीखड्गधारा अतोस्माकंबाहुरेवमंत्रीभवन्मंत्रस्तुज्ञातएवेतिभावः १२ तत्ररणएवमंत्रइतिनिर्णीतमाक्षिपति राजन्निति मुखसुखाः वाचैवसु
खंयेभ्यस्तेषांवाचः सुखाः किमाक्षेपे ताः वाचः एताः वाचः व्यसनसंगमेदुःखागमेसति तवक्षोदक्षमाः दुःखसहानक्षोदसंकटच्चूर्णयोरितिहेमी यद्वा

रावणः धैर्यमवलंब्य मतिर्विपश्चितांमंत्री रतिर्मंत्रीविलासिनाम् पराक्रमैकसाराणांमानिनांत्वसिवल्लरी १३ अथमहो
दरोनाममंत्री राजन्मुखसुखावाचोमधुराःकस्यनप्रियाः तवक्षोदक्षमाःकिंतुनैताव्यसनसंगमे १४ प्रियावामधुरावा
चःहर्म्येष्वेवविराजते श्रीरक्षणेप्रमाणंतुवाचःसुनयकर्कशाः १५विभवेभोजनेदानेतिष्ठंतिप्रियवादिनः विपत्तौचागतेन्य
त्रदृश्यंतिखलुसाधवः १६ अग्रेप्रस्तुतनाशानांमूकतापरमोगुणः तथापिप्रभुभक्तानांमौखर्यादिदमुच्यते १७ यैरेवस्तुतिभिः
स्वामीप्राप्यतेव्यसनाटवीम् पश्चान्मूकत्वमापन्नैरुद्धर्तुंशक्यतेकथम् १८ व्यसनसंगमे द्यूतपानाक्षस्त्रीमृगयादिवाक्पापारुष्योव्यसनानितद
द्योगे यद्वा मुखसुखाः वाचोमधुराः १४ प्रियाइतिश्रीरक्षणेराज्यैश्वर्यपालने सुगमं १५विभवेइति विपत्तौसत्यां अन्यत्रनीहृदंतरंवागतेसति १६ त्वंतु मंत्रदा
नानर्होसीत्याह अग्रेइति शीघ्रागतमरणानांतथापिप्रभुभक्तानां प्रभुप्रियकारिभिर्मंत्रिभिः मौखर्याद्वाग्मित्वात् इदंवक्ष्यमाणं १७ यैरिति यैर्मंत्रिभिः असद्गु
णारोपणंस्तुतिः अटवीवनपंकयोरितिहेमी दुःखंपंकं पंकादुद्धर्तुं १८





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ननु भवंतु व्यसनानि तरुणीयं कथं त्याज्येत्यत आह नद्य इति द्विषंतीति द्विषः निर्निंदाना प्रियकर्तारः यादृशस्तेषां नियतिर्भाग्यं ऐश्वर्यं यौवनमभिवृद्धिः
१९ दत्तेति त्वदंते तिज्ञात्वा कथयति अकार्ये अनुपस्थितकृत्ये यद्वा अकरणीये कर्मणि विदग्धैः कर्णांतषट्पदैर्मधुकरमालावत् कर्णाभ्यर्णरसिकैः चित्तग्र
हेति पाठः २० ननिंद्राद्विजयिनो मम केवा नराइतिचेत्तत्राह पद्मिनीति दिवा पद्मिनी कांतिमापेदे कुमुद्वती संकोचं रात्रौ कुमुद्वती कांतिमापेदे पद्मिनी संकोचमेव

नद्यश्च खलमैत्री च लक्ष्मीश्च नियतिर्द्विषाम् सुकुमाराश्च वनिता राजन्नास्थिरयौवनाः १९ दत्तोत्साहैरकार्येपि चित्तग्रहणकोविदैः सत्यं
विदग्धैर्भुज्यंते नृपाः कर्णांतषट्पदैः २० पद्मिनी कांतिमापेदे संकोचं च कुमुद्वती न भवंति चिरं प्रायो संपदो विपदोपि वा २१ तथा च सुरे
ज्यादिभिराचार्यैर्नीतिशास्त्रं त्रिधा मतम् ऐहिकं चामुष्मिकाख्यमैहिकामुष्मिकं तथा २२ ऐहिकामुष्मिकं तत्र शास्त्राणामुत्तमोत्तमम्
आमुष्मिकं तूत्तमं स्यादैहिकं चाधमाधमम् २३ यज्ज्ञानात्स्वामिनं हत्वा भजंते मंत्रिणः श्रियं विषशस्त्रादिभिः शास्त्रं तदैहिकमिति स्मृतं २४

क्षणाद्विपदः क्षणात्संपदः अतस्तवाद्य विपत्काल इति भावः मंत्रामननत्वादैश्वर्यातिशयत्वाच्च पतनांताः समुच्छ्रया इत्युक्तत्वात् २१ सुरेज्येति सुरेज्यो गुरुः
ऐहिकं इहैव सुखदं आमुष्मिकं पारलौकिकं इहैकामुष्मिकं इहामुत्र सुखदं २२ एषांन्यूनाधिकभावमाह ऐहिकेति शास्त्राणां नीतिव्यंजकग्रंथानां मध्ये २३
अथ शास्त्रत्रयलक्षणमाह यदिति मंत्रिणो राज्याहाः भ्रात्रादयः विषदानशस्त्रादिहननं आदिग्रहणात्तद्विपक्षाश्रयणं चेत्यादिभिर्मारणोपायैः २४ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नन्वेवंचेत् राज्यप्राप्तिस्तर्हि सर्वैः किंनकुर्युरित्यत आह तुल्यइति येषांमहीभुजामाज्ञाभंगएवसूर्यद्विजवधैस्तुल्यः वेदमार्गोच्छेदः सूर्यवधः तदधिष्ठातृत्वात्सूर्यस्य सूर्याइतिपाठेसूर्यानवोढास्त्री वधैरिति बहुवचनात् वधाद्यत्नयआक्षिप्यंतइति तद्वधेतेषांराज्ञांवधे शेषः सहस्रवदनोपि अतः कारणादैहिकंनीतिशास्त्रंअधमाधममित्युक्तं २५ अथामुष्मिकमुच्यते अपराधमिति स्वाधिकारप्रमादोत्थअपराधस्तद्विनापीडितः कुवाक्दरिद्रादिप्रापितः वैरूप्यंमंत्रिभावाभावम्

तुल्यः सूर्यद्विजवधैराज्ञाभंगोमहीभुजाम् तद्वधेचद्रवेत्पापंनशेषोवक्तुमर्हति २५ अपराधंविनामंत्रीप्रभुनापीडितोपिसन् नवैरूप्यंक्वचिद्यातितदामुष्मिकमुच्यते २६ राज्यग्रहणशक्तोपिमनसापिनचिंतयेत् सचिवः स्वामिनोनाशमैहिकामुष्मिकंहितन् २७ शुकश्चसारणोवीरश्चैहिकौमंत्रिणौतव वानरींतनुमास्थायहतौतत्रस्थितावपि २८ आवामामुष्मिकौराजन्विरूपाक्षमहोदरौ मैथिलीदीयतांतूर्णंनोचेत्सहचरौतव २९

२६ अथैहिकामुष्मिकमुच्यते राज्येति ऐश्वर्यातिशयात् भ्रातृत्वाद्वाराज्यंगृहीतुंक्षमोपि सचिवः मनसापिकिमुतवाचाकर्मणावा २७ प्रासंगिकमुक्त्वाप्रस्तुतमाह शुकश्चेति द्वाभ्यांवीरः शुकसारिणोपिवीरः स्वाम्युत्सवाद्दतइति वररुचिनीतोस्वतत्वंसत्वावानरींतनुमास्थायतत्ररामकटकेहतौगतौहनहिंसागत्योः अधुनापिस्थितौशरीरव्यत्ययेन तत्सक्ताश्रयणाच्चैहिकौ २८ आवांतुन तथेत्याह आवामिति भवतापीडितयोरप्यावयोर्वैरूप्यंनास्तिइत्याह मैथिलीदीयंतातूर्णमिति ननुतददानेयुवयोःकागतिरितिचेत्तत्राह चेन्नदास्यसि तर्हि आवांतवसहचरौयागति



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्तव सेवावयोरितिभावः २९ नीतीति क्वचित्कदाचित् प्रेष्यतां प्रस्थाप्यतां ३० अंतर्गताभिप्रायमवगम्य सीतां न दास्यति प्रत्युत कुंभकर्णादिष्वेतीतिज्ञा
त्वा मंत्रिणावूचतुरितिशेषः नीतिशास्त्रेति नीतिशास्त्रनिर्णेतॄणां गुरौ सति राज्यकृत्युवराजः ३१ नेति कोपे दुष्टे दुरव्ययं दुरधिकारिणि कोपातिशये
सति दुष्टस्य पुंसः शरीरे रक्तं न सर्पस्यापि मुखेन तस्य क्रोधविषाभ्यामवशोषणत्वात् तथा दुरधिकारिणि दुष्टे नियोगिनि सति प्रजासु धनं न राजन्यपि न अं

रावणः सभयं सशिरः कंपं स्वगतं वा स्वगतमेवोच्यते नीतिशास्त्रमिदं श्रुत्वा कुंभकर्णः क्वचिद्बली हंतिचेन्मामतो युद्धे प्रथमं प्रे
ष्यतामयं ३० विरूपाक्षमहोदरौ प्रभोः शिरः कंपनादंतर्गतमभिप्रायमवगम्य नीतिशास्त्रविदो धर्मं केवलं नृपतेः पुरः पठंति युव
राजादिपुरतो न कदाचन ३१ हा नाथ लंकेश्वर किमित्यावयोः शुद्धाधिकारिणो वैरूप्यशंकामंकुरयसि तेन्ये दुरधिकारिणः पापाः उ
क्तं च नसर्पस्य मुखे रक्तं न दुष्टस्य कलेवरे न प्रजासु न भूपाले धनं दुरधिकारिणि ३२ आवामपि दुरधिकारिणौ न भवावः भवानपि
मूढधीर्न तेप्यधिकारिणः पापा ये द्विषंति निजं पतिम् आवां तथाविधौ नैव भवानपि न मूढधीः नियुक्तहस्तार्पितराज्यभारास्तिष्ठं
ति ये स्वैरविहारसाराः बिडालवृंदाहितदुग्धमुद्राः स्वपंति ते मूढधियः क्षितींद्राः ३३ नरालेगतत्वात् अतः कुंभकर्णाद्याश्रयणान्न राज्यं त्वयि ना
स्मासु अतः कोलाभ इतिभावः ३२ नृपोप्यप्रमत्तः स्यादित्याह नियुक्तेति ते राजानो लं मूढधियः राज्यकरणाभावात् ये स्वैरं स्वच्छंदं ये विहारास्त एव साराः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

करणीयत्वेनोपादेयायेषाम् एवंभूताः संतः स्वयंतिष्ठति राज्यवृत्ताज्ञानमेवात्रस्वापः बिडालवृंदे आहिताप्रापिता दुग्धमुद्राक्षीरपात्रं यैस्ते अत्रबिडालसा
म्यंनियुक्तानांदुग्धस्यराज्यसाम्यमिति ३३ अथानिसंक्षिप्यराजवर्तनंदर्शयति उत्खातानिति उत्खातान्स्थानत्याजितान् प्रतिरोपयन् स्थानांतरंस्थापय
न्कुसुमितान् सुपुष्पवतः भृत्यद्रुमान् लघून् लघुवृक्षतुल्यान् क्षुद्रान्अन्यवृक्षसमानान् कंटकिनः पुनस्तापकारिकंटकद्रुमान् संहत्यस्थितानदुर्भृत्यान् अत्यु

> अपिच उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वन्लघून्वर्धयन् क््षुद्रान्कंटकिनोबहिर्निरसयन्विश्लेषयन्संहतान् अत्युच्चान्नम
> यन्नतांश्चशनकैरुन्नामयन्भूतलेमालाकारइवप्रयोगचतुरोराजाचिरंनंदते ३४ राजन्कार्यवशाद्विरुद्धसंग्रहोपिराज्ञाश्शुद्धेनाशु
> द्धसंग्रहः प्रयोजनहीनोपिकर्तव्यः प्रयोजनंजनयतिक्वचित्काले अत्रभगवान्भवतामिष्टः प्रमाणमेणांकमौलिः जीर्णेप्युत्कट
> कालकूटकवलेपुष्टेहठान्मन्मथेनीतेभासुरभालनेत्रतनुतांकल्पांतदावानलैः यः शक्त्यासमलंकृतोपिशशिनंशैलात्मजांस्वर्धुनीं
> धत्तेकौतुकराजनीतिनिपुणः पायात्सवः शंकरः ३५

च्चान् सकलैश्वर्योन्नतवृक्षान् नृपभावमारूढत्वात् नतान् आत्मानुकूलार्जवस्कंधान्भृ
त्यद्रुमयोः साम्यम् ३४ अथविरुद्धसंग्रहः कार्यवशात् शुद्धेनराज्ञा अशुद्धसंग्रहः प्रयोजनहीनोपिकर्तव्यएवात्रतद्गुरुं रुद्रमेवोदाहरति जीर्णेइति पुष
दाहेदग्धेपिशक्त्याचंद्रादिसंग्रहंविनापिकालकूटादिकहननसामर्थ्यशक्तिस्तद्युक्तोपिसंग्रहंकरोत्येव विषाग्निकोपानांकार्यवशात् लोकरक्षणसंहारेंद्रियज



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

य कार्यवशः तदर्थं चंद्रगंगो साधारणं शुद्धसंग्रहः शक्त्यासमलं कृतइत्युक्तत्वान्निष्प्रयोजनः तत्वतु नीतिवैपरीत्यमालोक्य मंत्रिचक्रचूडामणिर्यथाभृंगी
तथा वयमपीति वक्तुं रुद्रमुदाहरति जीर्णेपीति दैशिकगुणाः सच्छिष्यमाश्रयंतेइतिन्यायात् ३५ दिग्वासेति परमिलदंगनायोगेप्यजेयत्वात् कामोपरमल
मुक्तं भृंगी नामगणश्रेष्ठः कीदृशं वपुः सांद्रा यानाड्यस्ताभिरवनद्धानि सर्वतोबद्धानिशकलानिशिरःपादपाण्यादिखंडानियस्मिन् तत् भिन्नं शकलखंडे

दिग्वासा यदि तत् किमस्य धनुषा शस्त्रं च किं भस्मना भस्माथास्य किमंगना यदि च सा कामं परं द्वेष्टि किम् इत्यन्योन्यविरोधि
कर्मनिरतं पश्यन्निजस्वामिनं भृंगी सांद्रशिरावनद्धशकलं धत्तेस्थिशेषं वपुः ३६ ब्राह्मणं मंत्रिणं द्रोणं शुद्धं वीरं भविष्यति
गुरुं दुर्योधनस्य त्यक्त्वा यथा त्वं मा तथा भव ३७ अत्रांतरे मंदोदरी रावणेन सह खेलमाना स्मरस्मेरवाणीविलासलीलया अशोक
वनिकामागम्य जानकीस्थानमाक्रम्योपविश्याह प्राणनाथ लंकेश्वर पश्य मंदोदरीजनकजांगमनोहरत्वे भेदोस्ति कोपि यदि नाथ
विचारयत्वं रावणः मैनः प्रिये परिमलस्तव भेदमाख्यात्यंगे विदेहदुहितुः सरसीरुहाणाम् ३८ वेत्यमरः ३६ अथात्मनो मंत्रातिशय-

द्योतयन् भविष्यमाह ब्राह्मणमिति द्रोणं त्यक्त्वा तद्वाक्यमतिक्रम्य यथा दुर्योधनो भविष्यति तथा त्वमद्यैव मा भवेत्यन्वयः द्रोणमेव विशिनष्टि प्रथमं ब्राह्मणं तत्रा
पि मंत्रिणम् ननु केचिन्मंत्रिणोपि परपक्षमाश्रयंतइतिचेत्तत्राह शुद्धं तत्रापि गुरुं हितोपदेष्टारं वीरं दुर्निवाराग्रहं शूरं समूलाशेषकुलक्षयो दुर्योधनस्य भाव्यः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नथातवाद्यैवेतिभावः सुगमम् ३७ मैनइति हे प्रियेतवांगेमैनः मीनस्येवायंपरिमलोमैनः भेदमाख्याति कथयति विदेहदुहितुरंगैसरसीरुहाणांप
रिमलः भेदमाख्यातीतिभेदः ननुरूपादौइत्युक्तेकिमपिविमुखांदृष्ट्वापुनराह रूपेणेति हे प्रियेतव अस्याः सीतायाश्चसुगमम् वागर्थः प्रतिपाद्यते रामः अत्रैव
एवार्थेवाशब्दः रामएववासीताधरेरमिष्यति दशास्योरावणः सद्यएववामधुरेवामाः मांसाशिनस्तेषांधुरंवहतिवामधूः संग्रामस्तंप्रतिरमिष्यति रमयिष्यती

रूपेणवास्याश्चनकोपिभेदः खेदंप्रियेमद्वचनेनमागाः सीताधरेवामधुरेदशास्योरामोरमिष्यत्यथवाथसद्यः ३९ मंदोदरीसक
रुणालंकामधिक्षिपति बिभीषणःपापकथानिमग्नः स्यापाकुलोभूद्यदिकुंभकर्णः राजाभिमानीपतितःकलंकेलंकेनिमग्नासि
गभीरपंके ४० इतिनिष्क्रांताःसर्वे इतिश्रीमन्महानाटकेहनुमद्विरचितेमंत्रिवाक्यंनामनवमोंऽकः ९ ततः सुंदरंमंदिरंप्रवि
श्यरावणःसानुचरः भोभोलंकेश्वरानुजीविनोजनाःशृणुत अहमिदानींमायाप्रपंचरचनाभिर्जानकींमृदुसुरभिसुवर्णस्फी
तदोर्मूललालित्यविराजमानपीनोन्नतकुचकलशोपशोभितोरस्थलेखेलमानस्तन्मधुराधरंपास्यामि मायाविनोनुचराः यद्रो
चतेदेवस्य

त्याक्षिप्यते कर्मणिचतुर्थीवामोस्त्रीमुग्धयुद्धयोरितिनाममाला अन्यत्पूर्ववत् ३९ प्रतिपक्षाश्रयणात् लंकाभंगेप्सुलमेवपापकथातत्र
निमग्नः यदीतिनिश्चयेकलंकेपापेसीताभिलाषरूपे ४० इतिश्रीहनुमन्नाटकेटीकायांनवमोंऽकः ९ राक्षसान् रावयतीतिरावणोरामः मृतिलक्षण-



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

योरन्वित्यव्ययवृत्तौ लंकेश्वरस्यानुमृतिं प्रतिजीवितुंशीलं येषांते लंकेश्वरमरणार्थवाजीवनं येषांते भोवानराः मायावंचनयुद्धयोरितिविश्वः युद्धप्रपंच रचनाभिः अथेति तयोः रामलक्ष्मणयोरूपलावण्येताभ्यां पूर्णे अचैतन्याद्विपरीतननेत्रं सुगमम् अथवागर्थः प्रतिपाद्यते रजनीचरेस्वप्ने रक्षः स्वप्नोनि शाचरावितिहैमी अचितशिरसि अचितअजिनात्माः चितोवेशइतिविश्वः ईशः जनकदुहितुरग्रे स्थापयामास एयलोपइतीकारलोपः कीदृशइत्यपे

रावणः अथरजनिचरेशोरामसौमित्रिमायाविरचितशिरसीनद्धरूपलावण्यपूर्णे गलदविरलरक्तेप्रेतपर्यस्तनेत्रेजनकदुहि तुरग्रेस्थापयामासपापः १ जानकीसबाष्पंशिरःसरसीरुहद्वयमालोकयंती अहहजनकपुत्रीफुल्लराजीवनेत्रीनयनसलिलधा रागर्भनिर्मुक्तहारा रमणमरणभीतामृत्युनाकिंननीतात्दयदहनजालः संदहेद्वाविशालः २ रामशिरःकमलमधिकृत्यहारामहारमणहाजगदेकवीरतत्किंनस्मरसि अधरमधुमदीयंकामकेलीषुपीत्वा मृतमितियदवादीस्त्वीरवानीरकुंजे किममृतपरिपूर्णं शीर्णमप्यंबरेर्कस्त्वमइवनहिशत्रुंनाथमद्यासिघोरं ३

छायामाह रामसौमित्रिरूपेणमायया आविः प्रत्यक्षः एकंशिरोरामः एकंलक्ष्मणइति लक्ष्मणोमेघनादंहनिष्यति रामोरावणमिति व्यंजकआत्मावैपुत्रउत्पन्नइतिश्रुतेः पंधर्मपासमंततः पातीतिपापः धर्मपःपोस्त्रियांधर्मयमयोरित्येकाक्ष री १ अहहेति अहहइतिखेदे संदहेत् संदहतुलोडर्थेलिङ् सुगमम् वागर्थः स्वप्नेसीतावदति हेरामरमण जनकपुत्र्यहंमृत्युना रावणकालेनभवता

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आत्मसमीपंकिंननीता कीदृशीमरणमिचंप्रापिता अतोहृदयस्थस्त्वद्वियोगाग्निः किंनसंदहेत् अपितुसंदहेदेव चार्थेवाचकाशस्तुनः किंनेतिग्रह
णम् २ प्रकरणार्थः स्पष्टः वागर्थः हेतिकष्टं अनुभूतंभवता अधरेति तीरेनदीतीरेवानीरकुंजस्तत्र अमृतपरिपूर्णंचंद्रमंडलं शीर्णंगतरसं किंत्वधरामृतं
तुनवीनत्वात्सरसमितिभावः जरठारसयोः शीर्णमितिहैमी अर्कः सूर्यस्तमइवांधकारमिव क्षीणोंधतमसंतमइत्यमरः वागर्थेप्ययमेवार्थः ३ कोपातिशया

रावणः शिरोविरहशोकमोहरोषप्रेमाकुलामालापैराश्वासयति जानकीसत्वरंप्राणांस्त्यक्तुमिच्छंतीभोप्राणाधिनाथराम अ
हहमधुरवाणीकिंनवक्त्रारविंदेनयनकमलयोस्तेनोमदंगेविलासः अमरपुरवधूनांवल्लभोद्यासिनूनंव्रजतुपरमहंसोमेत्वदालिंग
नेन ४ इतिरामशिरःकमलमालिंगितुमिच्छति आकाशे नखलुनखलुसीतेरामभूपालमौलिः समरशिरसिवध्योनप्रियस्तेक
दाचित् स्पृशकथमपिमातर्मानिशाचारिणस्त्वंहरहरहरहरभक्तस्यैषमायावतारः ५

न्मृतमारणोक्तिः मोहोत्रशोकादिः रतिस्तदाकुलाम् वागर्थः शिरसिशोकमोहौ विरहे अद्यापिरामोमांनालिंगतीतिरोषप्रेमाणौ रावणपक्षेरामइतिशेषः वागर्थे
रामोपरिक्रमयित्वेतित्वदालिंगनेनहेतुना प्रकरणंसुगमं वागर्थे अत्युत्कटता माविःकरोति रावणेहतेयावन्निरुद्धदेवांगनावल्लभः यावदिति मेममत्वदालिं
गनाभावेनजीवोव्रजतु ४ वागर्थेशिरःकंरावणशिरोग्राहिणंकमात्मानंराममलममतिशयेनरामभ्रांत्याएनंरामरूपंरावणंमास्पृशेति ५ ६ ६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मायावंचितोपायमासाद्य अवगम्यमाभैषीर्भयंमाकार्षीः ६ कोलेति आशुरामैः कौशल्यव्यंजकंज्ञापयति आकर्णेति काहलो वाद्यभेदः मर्द्दलो मुरजः सुग
मम् ७ विरमेति बलभिदुपलः इंद्रनीलमणिस्तद्वन्नीलः इंद्रनीलमणिवदुज्वलः हुंकुतस्तेभयमिति यद्वाहुं रावणंनिर्भर्त्स्य हुं भये भर्त्सने पिचेति-

इत्याकाशवाणीश्रवणमात्रेणाशिरसिगगनमुत्पत्यनिष्क्रांतेरावणेनसह जानकीसहर्षंसत्र पंच अयिपरमधर्मिणिकृपातरं
गिणिसरमेकिमित्यद्भुतमिति सरमाराक्षसीसदयम् जानकित्वंनजानीषेरावणस्यातिदारुणाम् मायामासाद्यमाभैषीरामःका
मंसजीवति ६ कोलाहलंकाहलमर्द्दलानांहेषारवंसज्जतुरंगमाणाम् आकर्णयाकर्णविशालनेत्रेरामागमादार्तनिशाचराणाम् ७
विरमविरमशोकात्कोपमानोथरामः सतनयपशुबंधून्रावणंमर्दयित्वा बलभिदुपलनीलः कोमलः कोमलांगित्वदधरमधुपानंहुं
करिष्यत्यजस्त्रम् ८ जानकी कामंजीवतिमेनाथोइतिसाविरहंजहौ प्राङ्मत्वासत्यमस्यांतंजीवितास्मीतिलज्जिता ९ ततःपु
नरप्यशोकवनिकांप्रविशति मारनाराचभिन्नोरावणः सुरसुंदरीभिः परिवृतः सीताहृदयेविकारमुत्पादयितुंभोजानकि-
पश्य

शाश्वतः ८ काममिति प्राक्पूर्वं अस्यरामस्य अंतं मरणंसत्यंमत्वाजीवितास्मि पुनः मेनाथोजीवतीति मत्वाशुचंविजहौ त्यक्तवत्यस्मी
तिलज्जितासापत्रपाभूति ९ अथान्यमायामनुवर्णयति अस्मादिति हेसीतेतव सतीचारित्र्यंपातिव्रत्यधर्मस्तस्यवल्लीप्रसारएववल्लीतस्याः फलंसांप्रतं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संगतं अद्यैवप्राप्तं धर्मः परत्रफलदस्तवतत्रैवेतिभावः तदेवफलंद्योतयति यतः एताः पुरंध्र्यः मदीयनार्यः त्वत्पदपद्मयोः षट्पदवधूप्रायाः भ्रमरीतुल्याः यथाम्भ
संगतं अद्यैवप्राप्तं धर्मः परत्रफलदस्तवतत्रैवेतिभावः तदेवफलंद्योतयति यतः एताः पुरंध्र्यः मदीयनार्यः त्वत्पदपद्मयोः षट्पदवधूप्रायाः भ्रमरीतुल्याः यथाम्भ

मर्योरविंदमाश्रयंते तथैवैतास्त्वत्पादमितिभावः तासांवैशिष्ट्यंद्योतयति किंभूताः अस्मदीयोयश्चंडचपेटघातः करतलप्रहारस्ततः पतिताः विदलिताः येस्वर्द
तिनस्तेषांकुंभस्थलेभ्यः सकाशात् स्थूलंबहुतरंयथास्यात्तथा उन्मुक्ताः निर्गताः याः सरक्तमौक्तिकास्तासांलतास्तोमैर्वल्लरीसमूहैरर्चिता अंघ्रयस्तनाम्रयासां

अस्मच्चंडचपेटघातपतितःस्वर्द्विकुंभस्थलंस्थूलोन्मुक्तसरक्तमौक्तिकलतास्तोमार्चितांघ्रिस्तनाः एतास्त्वत्पदपद्मषट्पदवधू
प्रायाः पुरंध्र्योध्रुवंसीतेसंप्रति संगतंतवसतीचारित्र्यवल्लीफलम् १० सीतेपश्यशिरांसियानिशिरसाधत्तेमहेशः पुरातानित्वत्पदसंश्रि
तानिसुभगेकस्मादवज्ञायसे श्रुत्वैवंपरदारलंपटवचःस्मित्वाहतंरावणंनिर्माल्यानिशिरांसितानिनवधिक्साध्वीवचः पातुवः ११ भ
वित्रीरंभोरुत्रिदशवदनग्लानिरधुनासतेरामः स्थातानयुधिपुरतोलक्ष्मणसखः इयंयास्यत्युच्चैर्विपदमधुनावानरचमूर्लघिष्ठेदं
षष्ठाक्षरपरविलोपात्पठपुनः १२

ताः १० सीतेइति पुराशिरः कर्तनसमयेअवज्ञायसे अवज्ञांकरोषिस्मित्वेत्यत्र कोपातिशयाद्धास्यं शिवोत्तीर्णंतु
निर्माल्यंतन्नस्पर्शार्हमुच्यतइतिवचनात् पात्विति तस्याः वचसान्येपिजितकामाः भवंतीतिभावः ११ भवित्रीति हेरंभोरु अचिराच्छीघ्रमेवत्रिदशानांवद
नग्लानिर्मुखसंकोचः भवित्री भाविनी अस्तीतिशेषः कुतइत्यतआह यतोयुधिसप्रसिद्धस्तेत्वदीयोरामः ममपुरतोनस्थातानस्थास्यति उच्चैर्विपदं जानकी॰हे



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चरणत्रिकेतुक्रमेणत्रिन
लघिष्ठहेलघुतर इदंपद्यं षष्ठाक्षरपरे सप्तमाक्षरंतद्द्विलोपात् विलुप्येतित्यप्लोपेपंचमी पुनःपठ एव मुक्तेसप्तमाक्षरलोपादयमर्थः
विलोपः दशवदनग्लानिः रामः स्थाता उच्चैः पदंयशोरूपम् १२ रेरेइति हेसीतेने सः अयंत्वत्सदनतः दशास्यः कस्मादवज्ञायसेइतिभावः सकः यस्येतिक्रुद्धे मू
र्धानंईशोपि जगतामीश्वरोपि रुद्रः उच्चैरनुनयति इतिकिं रेरेइत्यनादरे लंकेशत्रिपुरजयिनः सकाशात् मांछित्वा प्रसादंमाप्रतीषीः मास्पृह मागृह्णीष्वेत्यर्थः हे-

मारा
रावणः सर्वदग्ध्यम् रेरेलंकेशलोल्यात्त्रिपुरविजयिनोमाप्रतीषीः प्रसादंमा मांछित्वाल्पबुद्धेनखलुभवसिवैप्राकृतःप्राणरंकः
रेर्माविनारीर्वरमनलभुवाशापितोसीतियस्य क्रुद्धं मूर्द्धानमीशोप्यनुनयति भृशंसोयमुच्चैर्दशास्यः १३ अर्धचेतसिजानकीविरमयत्य
हूंचलंकेश्वरः किंचार्द्धविरहानलः कवलयत्यर्द्धंचरोषानलः इत्थंदुर्विधवैशसव्यतिकरे दाहेसमेप्येतयोरेकंवेद्मितुषारदग्धमपरंदग्धंक
रीषाग्निना १४ अल्पबुद्धेमारारेः खलुत्वंप्राणरंकोनभवसि वरगृध्नवःप्राणरंकाः त्वंतादृग्न अत्रेवार्थेवै प्राकृतइवाधुनिकइववयथेदानीतनः प्राणरंकस्त
थात्वंनेतिभावः मामेवमाक्रुश्यरुद्रमाक्रोशति हेमाररेकामशत्रोवरंमाविनारीः एतस्यवरंमादेहि तथापिदित्संतंमालक्ष्याह अनलभुवाशापितःत्वदात्मजेन गुहेनशा
पितोसि चेदस्मैवरंदास्यसि तर्हिगुहस्यशपथोस्तीत्यर्थः वरार्थीभजन्नभक्तः भजनानुसारंदास्यन्नप्रभुरितिश्लोकाभिप्रायः १३ रामस्यदग्धत्वदयत्वमुपपा
दयन्नात्मनोभजनीयत्वमाह चित्तस्यद्वौभागौ तद्द्विभागंदर्शयति रामस्येतिशेषः रामस्यचेतसिविषयेअर्धचेतः यद्वाचेतसोर्धंचेतसि तस्मिन्कर्मणि सप्तमी अर्द्धं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चेतः जानकीविरमयति तत्स्मरणाविर्भावात् चपुनः अर्द्धंचेतः लंकेश्वरोविरमयति तदुत्पन्नकोपातिशयात् किंचतर्कें किंसीताक्रांतरामत्वदयार्द्धं रामविरहाग्निः कवलयति भस्मीकरोतिचपुनः अर्धंचेतसोर्द्धंमद्रावणाक्रांतंतद्रोषानलः कवलयति दुर्विधोदुः प्रकारोवैशसोहिंसातस्यव्यतिकरः शीतोष्णाव्यत्ययोयत्र एवंभूते एतयोः कामकोपानलयोर्दाहेसमेपिसति यद्वा एतयोश्चेतसोर्धयोर्मध्येएकमर्धंतुषारदग्धंवेद्मि कामाग्नेः शीतदाहतोक्ता अपरमर्धंकरीषाग्निदग्धंवेद्मिशुष्कगोमयचूर्णंकरीषः एतेनकोपाग्नेरुष्णत्वं अतोरामोदग्धस्त्वदयोजातः त्वंमाभजेत्याशयः १४ मुग्धेइति पुनरप्यनुनयति दैन्याविष्करणायपुनः पुनः संबुद्धिः

मुग्धेमैथिलिचंद्रसुंदरमुखिप्राणप्रयाणौषधिप्राणान्रक्षमृगाक्षिमन्मदनदिप्राणेश्वरित्राहिमां रामश्चुंबतितेमुखंचसुमुखेनेके नचाहंपुनश्चुंबिष्यामितवाननंबहुविधैर्मुंचाग्रहंमानिनि १५ जानकी विरमविरमरक्षः किंवृथाजल्पितेनस्पृशतिनहिमदीयंकंठसीमा नमन्यः रघुपतिभुजदंडादुत्पलश्यामकांतेर्दशमुखभवदीयोनिष्कृपोवाकृपाणः १६ हेमन्मथनदिकामतरंगिणिप्रकरणंसुगमं वागर्थप्रतिपाद्यते अत्ररामस्यविप्रलंभेप्रलापावस्था सोत्कारसोदधौ कांताश्रितकाल्पनिकव्यवहारः स्यात्प्रलापोयमिति अत्रमुग्धेत्यादिपूर्वकल्पनारामोवदतिहे मुग्धेत्यादिसंबोधनवतीमैथिली रामोहं एकेननिरुपमेनमुखेनतेमुखंबहुविधैश्चुंबनभेदैश्चुंबिष्यामिहेमानिनि आग्रहंमुंच त्यजपुनरपितवाननंत्वदीयमाननंमामितिशेषः मांचुंबिष्यतीतिआग्रहंमुंचेत्यर्थः वर्तमानसामीप्येवर्तमानवद्वा परस्परचुंबनाद्रसासंगः सूचितः १५ विरमेतिहेरक्षः दशमुखभवदीयः निष्कृपोनिर्दयः कृपाणःखड्गः वास्पृशति वाहठात्स्पृशति सुगमम् १६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मद्ध्यानेनेति क्रोधातिशयात्कोपमाविष्करोति मयाज्ञातं मद्ध्यानेनरामः सीताभूत् त्वद्रूतेनविशेषितत्वात् तस्यरामस्यध्यानेनाद्यमयारामेणभूयतेरामोभवामीत्य-
र्थः १७ भेरीति राक्षसेंद्रः स्वयंरामोभवत् रामरूपोभवदिति माययाछिन्नान् कृत्तान् रावणस्यमूर्ध्नः शिरसिरुहभरेषुकेशेषु एकतः पंचदधानः रामवेष-
धारीमायारावणस्यमस्तकान् पंचपंचकराभ्यांदधानः काकाक्षिन्यायेनएकतइत्युभयत्रगृह्यते १८ तत्रागतः सकामश्चेद्दतआह लंकेति यस्यरामस्यनाम्नः स

पश्य मद्ध्यानेनाभवद्रामः सीतारक्षस्तुतस्यवै पश्यत्वत्कुलनाशायमयारामेणभूयते १७ इतिरावणोनिष्क्रांतः निजमंदिरं
कियंतंकियतंसमयंनीत्वास्वगतइदानींमहांतंप्रपंचमुत्पाद्यनूनंजानकीमनुभविष्यामीत्यवधार्य भेरीनिःस्वाणशंखध्वनिगणतुर
गस्यंदनस्फीतनादैः सानंदं राक्षसेंद्रः कटकभटभुजास्फालकोलाहलेन लंकामापूर्यरामः स्वयमभवदथोमाययारावणस्यछिन्नामूर्ध्नो
दधानः शिरसिरुहभरेष्वेकतः पंचपंच १८ एवंविधोभूत्वापुनरशोकवनिकांप्रविश्यरावणः लंकाभटोथरघुनंदनवेषधारीपापोजगा
मपुरतोजनकात्मजायाः नाम्नापियस्यकुतइच्छतितस्यरूपादन्यांगनापहरणेनमनः कदाचित् १९ जानकी रघुनंदनवेषधारिणंत
मालोक्यसहर्षं

काशात्तद्रूहणादेवमनः नामगृहीतुरन्यांगनापहरणंनेच्छंति किमुकर्तुंतस्यरामस्यरूपात्सरांगनाहरणंकुतइच्छतीति १९ साक्षादिति
साक्षान्निःसंशयंराममालोक्यझटितिशीघ्रंहर्षादुत्थायकुचनदीभरेणनम्रापि एतेनझटित्युत्थानायोगोदर्शितः उदस्तदोर्भ्यांरामालिंगनायोद्यतभुजाभ्यांदर

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मीषद्दलितं स्फोटितं यत्कुचाभोगचैलं कुचमंडलवस्त्रं तद्युक्तं उन्नतमंगं कुचरूपं यस्याः सुगमं २० भूत्वेति ततोनंतरं अवसरे आलिंगनसमये स्मरार्तः रामरूपधारणात्सु
राकामार्तोपि रावणः क्लीबोभूत्वा ततः यायात् सीतावंचनाश्रितमायातः अंतरधीयत अदृश्योभूत् द्राक् शीघ्रं जनकात्मजायां रामदर्शनात् कामशरातुरायां सत्यां शि
वशिवकष्टं कष्टं २१ हेति यत्र काले मंदोदरी राक्षसेंद्रं चुंबिष्यति तत्र तस्मिन्नवसरे त्वमपि वेत्स्यसि उक्तं च पंचतत्वानि धर्मश्च रविचंद्रौ च पाशभृत् रात्रिर्दिवा नर

साक्षादालोक्य रामं झटिति कुचतटीभारनम्रापि हर्षादुत्थायोदस्तदोर्भ्यां दरदलितकुचाभोगचैलोन्नतांगी धन्याहं प्राणनाथ त्यज
रजनिचरच्छिन्नशीर्षाणि गाढं मामालिंगाद्य खेदं जहि विरहमहापावकः शांतिमेतु २० इत्यालिंगितुमिच्छति रामवेषधारी रावणः सविषा
दं भूत्वा ततोप्यवसरे जनकात्मजायां लंकापतिर्मकरकेतुशरातुरायां क्लीबो विशीर्णमणिदंडयुतः स्मरार्तो यायात्ततः शिवशिवांतरधी
यत द्राक् २१ जानकी समरोपदेशाद्रावणं रघुनंदनवेषधारिणं मत्वा सविषादं हाकाश हा धरणि हा वरुणार्क वायो वेत्स्यामि धर्म कथमाग
तमात्मनाथं आकाशे मंदोदरी रघुशराहतराक्षसेंद्रं चुंबिष्यति त्वमपि वेत्स्यसि तत्र रामं २२ अथ निजकेलिमंदिरस्थो रावणः स्वगतं

स्यैते वृत्तज्ञाः समुदीरिता इति मनुः अतः आकाशादीनां रावणवृत्तज्ञानसामर्थ्यात् २२ अथेति रामत्वे रामभावे विषये वर्तमाने मयि स्थिते सति कीदृशो मयि कृतकृ
त्ये कृतं कृत्यं येन यद्रामकृत्यं रावणशिरःकर्तनादिकं तदपि कृतमिति भावः तदपि एताः प्रवृत्तयः क्लीबत्वादयः निरुध्यंति कीदृश्यः पापं मूलं यासां ताः पूर्वपापान्वा



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्रेप्सितसुखमितिकामिमतम् २३ जनस्थानेइति विषयःसीताभिलाषः सएवमृगतृष्णा तया आसमंतो हताधीर्यस्यतेनमयारावणेनजनस्थानेदंडकारण्येदे
शेभ्रांतं अत्राप्युदश्रुयथास्यात्तथाप्रतिपदं हेवैदेहीतिवचः प्रलपितं अथचलंकाभर्तुर्मेममवदनानांयापरिपाटीतस्याविियोजनंकर्तनमितियावत् कृत्तावदनप
रिपाटीषु घटनेतिपाठेरावणमुखपंक्तिषु इषुघटना बाणयोगप्रहारः कृतेति मयापिरामत्वंमायारामरूपत्वं आप्तंप्राप्तं तथापिकुशलवसुतासीतानाधिगता
नप्राप्ता दर्भसीरनृपाःकुशाइतिहैमी कुशेनसीरेणलभ्यतेलक्ष्यतइतिकुशलवः सीरध्वजोजनकइत्यर्थः इदमेवपद्यंहतरावणस्य प्राप्तराज्यस्यप

कृत कृत्येपिरामत्वेवर्तमानेमयिस्थिते निरुध्यंत्येवताः सर्वाः पापमूलाः प्रवृत्तयः २३ जनस्थानेभ्रांतंकनकमृग
तृष्णाहतधियावचोवैदेहीतिप्रतिपदमुदश्रुप्रलपितम् कृतालंकाभर्तुर्वदनपरिपाटीषुघटनामयाप्तंरामत्वंकुशलवसुता
नत्वधिगता २४ रित्यक्तसीतस्यरामस्यवाक्येनव्याकुर्वंति तद्यथा विषयाएवमृगतृष्णाचतुर्दशसमावनेस्थित्वाराज्यंप्राप्स्यामीतिमृगतृष्णावि
षयः सीताभिलाषस्तदन्वेषणरूपः रमयतिसर्वानितिरामोराज्यंतद्भावोराज्यत्वमपिप्राप्तं अन्यत्पूर्ववत् अथास्यतृतीयोप्यर्थोस्ति कस्यचिद्भिक्षुकवाक्येन
विषयाः स्रक्चंदनस्त्रीपुत्रलालनरूपास्तएवमृगतृष्णावदविद्यमानास्तैराहताधीर्यस्य तेनमयाभिक्षुणाजनस्थानेजनानांलोकानांस्थानेस्थानेगृहेगृ
हेभ्रांतंएकवचनमुपलक्षणं जात्यैकवचनंवा वैनिश्चयेन प्रतिपदंदेहीतिउदश्रु यथास्यात्तथाप्रलपितंपदंस्थानेरसस्थितावितिचरकः यस्यरसस्ययः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आश्रयस्तदग्रेतद्रसाभिनयेनउदश्रुत्वमुक्तम् अलमत्यर्थंकाभर्तुः कुत्सितप्रभोः संबंधेवदनस्यपरिपाटीरसाभिनयवाक्चातुर्यादिरूपातस्याविशेषेघटना
चेष्टाकृता एवंरामत्वतन्तद्रंजनत्वमासंकुशलवसुनाउत्तमवसुत्वंरत्नहेमादिसमूहरूपानाधिगतानप्राप्तेति २४ इतिश्रीमद्धनुमन्महानाटकेदीपिकायां
मोहनदासविरचितायांरावणप्रपंचोनामदशमोंऽकः १० अथेति उक्षेति उक्षावृषः धनाधिनाथेकुबेरेत्रिपुरांतकस्यरुद्रस्यदशाविपरीता तथारुद्रानुचर



इतिश्रीमन्महानाटकेहनूमद्विरचितेरावणप्रपंचोनामदशमोंऽकः १० अथतत्रसुवेलाद्रिकटकेलंकापतेः सकाशादधिगतंदूतमंग
दंजानकीवल्लभःपप्रच्छ अयेदूतांगदलंकेश्वरेसंधिर्नजनिताप्रीतिकारिणीस्यादनुपकारिणीवा अंगदः राजन्सर्वथेयमनुपकारिणीपुल
स्त्यापत्येषुप्रीतिरितिभगवानिहोदाहरणंहरिणांकशेखरस्तद्गुरुत्वात् उक्षारथोभूषणमस्थिमालाभस्मांगरागोगजचर्मवासः
एकालयस्थेपिधनाधिनाथेसख्यौदशेयंत्रिपुरांतकस्य १ रामोविहस्य भोमहावीरांगदयुवराजवानरभटान्ब्रूहि भोभोसुग्रीवसैनिकाः
रात्रौसावधानतयास्थातव्यं श्वःसूर्योदयेरामस्यसमरोत्सवोभविष्यतीति अंगदस्तथाकरोति रामकटकेशयानौरामलक्ष्मणौनिहंतुंरा
वणेनप्रहिताप्रभंजनीनामराक्षसी

स्यापिरावणस्यविपरीतैवमतिरितिभावः १ उत्खातेति अस्यायमर्थः साप्रभंजनीराममितिदध्यौइतिशेषःइति
किंवराक्यहं अद्यास्मिन्नवसरेकथंनिहन्मि कीदृशी उत्खाताकोशान्निःसारितादारुणासुतीक्ष्णाचक्रूपाणिकाछुरिकायस्याःसा हननाक्षमत्वमेवद्योतयति–



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निर्भरतः निबिडासुवीराटवीषुवीरपंक्तिषु शयानं वनपंक्त्योरथाटवीति हैमी तत्रापि सुदर्शनाख्यचक्रस्य गुरुयथास्यात्तथा भ्रमणेन रामस्य विश्वतः परिक्रमेण गु
प्तं रक्षितम् २ हे निशाचरि मागाः क्षणं स्थित्वा यत्र रावणस्तत्र पुनर्गम्यतां किमाक्रंदसे किमर्थमाक्रंदं करोषि सुगमम् समुद्रोऽब्धिरकूपार इत्यमरः २ रवेलं तइति

उत्खात दारुणासुतीक्ष्णकृपाणिकासौवीराटवीषु निशि निर्भरतः शयानं दृष्ट्वा सुदर्शनगुरुभ्रमणेन गुप्तं रामं निहन्मि कथमद्य वरं वराकी २
तत्रावसरे प्रबुद्धमंगदं वीरमवगम्याधीरं पुनर्गंतुमुद्यता प्रभंजनी अंगदः साटोपं मागास्तिष्ठ निशाचरि क्षणमपि स्थित्वा पुनर्गम्यतां यत्रास्ते
भुजविक्रमाखिलजगद्विद्रावणो रावणः अत्राप्यंगदबाहुपाशपतिता मूढे किमाक्रंदसे सिंहस्यांतिकमागते वहारिणी कस्त्वां परित्रायते ३
कटके वानरभटास्तद्घोरचीत्कारमाकर्ण्य भैरवरवैर्दोस्तंभास्फालकेलिमभिनीय साटोपमुत्पाटितमूलोग्रशैलधारिणः प्रचंडकोलाह
लेन लंकामाकुलयंतोऽकूपारस्येव याभिन्याः परं गताः लंकायां रावणः सूर्योदयमासाद्य वानरवाहिनीकोलाहलामर्षमूर्च्छितः समरभूमौ
कटकमुत्कटं प्रस्थाप्य लंकाचलशिखरपर्यंकमारुह्य पुरःस्थितेन महोदरेण मंत्रिणा सह रामवाहिनीमहिमानं पश्यतिस्म तत्र रामक
टके वानराः

आशु शीघ्रं उत्पाट्य उन्मूल्य विमानं विविधवृक्षसमूहं मानश्छिन्नोन्नतो वृक्ष इति हैमी मानानां समूहो मानं विविधं मानं यद्वा उत्पाट्य धुराद्यंगा
नि विभज्य विमानं राक्षसानां रथादीनि विभीषणं दृष्ट्वा च पुनः रघुपते त्राहीति विभीषणबलस्य वाक्यं श्रुत्वा हनूमाननुपेत्य स्वसमात्मानं प्रत्याददर्श दर्शयामास विभीष

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णस्थानमगमदित्यर्थः अन्यत्सुगमम् ४ त्यंचदिति हेरावण जीयतेऽस्मिन्निति जैत्रं तस्य रामस्य जैत्रंचेदं यात्रादिनं कथंनविदितं केनप्रकारेणनज्ञातं किंभू
तंजैत्रं यात्रादिनंत्यंचन्नम्रीभवद्भूवलयंयस्मिंस्तदिति सर्वत्रचलंतः क्षितिधराः यस्मिन् क्षुभ्यंतः समस्ताः अर्णवायस्मिंस्तत् यद्वा सर्वेअर्णवाः त्रस्यंतोये

खेलंतोरिवलवानराजलनिधौदृष्ट्वारणेराक्षसानुत्साद्याशुविमानमेवजगृहुः पृथ्वींसमांचक्रिरे दृष्ट्वातंचविभीषणंरघुपतेत्राहीति
वाक्यंतदाश्रुत्वासौहनुमानुपेत्यतरसाप्रीत्याददर्शस्वयम् ४ लंकायांरावणः महोदरंपृच्छति भोमहोदरकदागतोरामोऽस्माभि
र्नविदितंरामागमनदिनं महोदरः सीतांप्रयच्छतुरामायेतिबुद्ध्वासाहसमवलंब्यराजन्लंकेश्वर त्यंचद्भूवलयंचलत्क्षितिधरं
क्षुभ्यत्समस्तार्णवंत्रस्यद्वैरिवधूविलोचनजलप्रारब्धवर्षोद्गमम् प्रोदंचत्कपिवाहिनीपदभरव्याधूतधूलीपटच्छन्नादित्यपथं
कथंनविदितंतज्जैत्रयात्रादिनं ५ जयप्रयाणेरघुनंदनस्यधूलीकदंबास्तमितेदिनेशे शशिप्रभंछत्रमुदीक्ष्यबालासूर्योदयेरोदि
तिचक्रवाकी ६ सहायार्थमिंद्रप्रदत्तंछत्रगजतुरंगावलीसंभवोरामदेवस्य रावणः महोदररामः कुत्रास्ते महोदरः देवपश्य

वैरिणः रक्षांसितेषांवधवस्तासांविलोचनजलैः प्रारब्धोवर्षायाउद्गमोयत्र प्रकर्षेणोदंचन्तोयेकपयस्तेषांवाहिनीभ्यः पदभरेणचरणप्रक्षेपातिशयेनव्या
धूतोव्युत्थापितोयोधूलिपटरेणुविस्तारस्तेनछन्नः आच्छादितः आदित्यपथोयस्मिन् विस्तारेपटन् ५ जयेति जयार्थेप्रयाणंजयप्रयाणं ६ अंकेइति



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्लवगबलपतेः सुग्रीवस्य अक्षस्य त्वत्सुतस्य हंतुः हनूमतः अंके इत्युभयत्र धनुर्जयस्यातिशयज्ञानार्थं रक्षः कुलघ्नमिति अत्रज्याविशिष्टत्वं प्रगुणितत्वं त्वदनुजव चनै एतेन लंकाभंगक्रमकथाकथनं सूचितं ७ ८ गगनमिति हे रावण सीतापतिपदानुगैः प्लवगैर्गगनं गिलितं लोपितं भूमिर्गिलिता अदृश्याकृता दिशो गिलि

अंके कृत्वोत्तमांगं प्लवगबलपतेः पादमक्षस्य हंतुर्भूमौ विस्तारिता यां त्वचि कनकमृगस्यांगशेषं निधाय बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनार्पितं तीक्ष्णमक्ष्णोः कोणेनोद्वीक्ष्यमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ७ अपिच भ्रूभंगाद्धद्रुसिंधूर रघुपतिरवताद्धं दिना वेदितो सौ विष्टस्ते मातुलस्य त्वचिपुनरनुजं मंत्रिणे दत्तकर्णः बाणे दत्ताई दृष्टिस्तव जयपिशुने लक्ष्मणे सस्मितोऽयः सुग्रीव ग्रीव बाहुः कृतचरणभरः सोंगदे रावणायं ८ गगनं गिलितं भूमिर्गिलिता गिलिता दिशः सरितः प्लवगैः पीताः सीतापतिपदानुगैः ९ देवमहोत्सातं पश्य मध्यंदिनेपि क्वचिन्मीनः क्वचिन्मेषः क्वचिल्लंबितकृत्तिका क्वचिन्मृगशिरः सार्द्रं नभो व्याधग्रहायते १० रावणः साभ्यसूयम् अहो महोदरमात्यकिमर्थं वल्लासे पश्य

ताः निरालोकीकृताः एतेन तद्बहुत्वमुक्तम् ९ क्वचिदिति पूर्वाचरमचरणउत्तरारेवत्युपलक्षितो मीनः अश्विनी भरण्युपलक्षितो मेषः कृत्तिकासवैव सार्द्रं आर्द्रासहितं मृगशिरः व्याधग्रहेपि मीनो मत्स्यः कृत्तिका कृपाणिका कृत्तिकास्त्री कृपाणिकेति हैमी मृगशिरो मृगमस्तकं सार्द्रं-सरुधिरम् १० रावणः एतदुक्तैरात्मनो मंगलमवगम्याक्षिपति प्रतापमिति प्रतापाक्रांतः शैत्यमाश्रयतीति प्रसिद्धं तदेव द्योतयति अपरजलधौ पश्चिम

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

समुद्रे मज्जति पूर्वसमुद्रे उन्मज्जति स्वस्य जनिरुत्पत्तिर्यस्मात्तत्कमलम् ११ विदेहेति दृष्टेर्मधुपांगनासाम्यं रामस्य तमालसाम्यमिति सुगमम् १२ हेमेति वा
नराणां मध्ये एके वानराः सुगमम् १३ विरमेति काचित् कुंभकर्णस्य प्रेयसी कर्णाभ्यर्णे चीत्कुर्वंतं महोदरमिति कथयति इति किं विरम विरमेत्यादि सर्वत्रानादरे वी-

प्रतापं संसोढुं रविरपि दशास्यस्य न विभुर्निमज्जत्युन्मज्जत्यपरजलधौ पूर्वजलधौ हरिः शेते वार्द्धौ निवसति हिमाद्रौ पुरहरो विरिंचिः किं
चापि स्वजनिकमलं मुंचति न वा ११ अत्रांतरे यथा रावणो न वेत्ति तथाशोकवनिकास्थितां विमाने जानकीमारोप्य रामं दर्शयति स्म सर
मा विदेहदुहितुर्दृष्टिर्दशग्रीवरिपौ बभौ सुनीले वमनोरम्ये तमाले मधुपांगना १२ तत्र रामकटके वानराणां हेमप्राकारजघनां रत्नवृ
निदुकूलिनीं लंकामेके त्रिकूटस्य ददृशुर्वनितामिव १३ लंकायां रावणः भो महोदर सर्वैर्मंत्रिभिः प्रबोध्यतामयं वीरः कुंभकर्णः महोद
रः यदाज्ञापयति देव इति निष्क्रम्य कुंभकर्णनिद्रालयं जगाम तत्र कुंभकर्णप्रिया विरम विरम तूर्णं कुंभकर्णस्य कर्णान्तिके खलु तव निना
दैरेष निद्रां जहाति इति कथयति काचित्प्रेयसी प्रेक्ष्यमाणा मशकगलकरंध्रे हस्तियूथं प्रविष्टम् १४ सा किंभूता प्रेयसी मशकवत्कुंभकर्णगलक
रंध्रे कंठरंध्रे मुखेन श्वासानापूर्यापोत्थं हस्तिभिराक्रमणस्यापि गलच्छिद्रे मशकवत् यथा अनेके मशकाः कस्मिंश्चिच्छिद्रे विशंति एवं मुखाश्वासेनास्यांतर्गतं हस्ति
समूहं प्रेक्ष्यमाणा यो नरहस्तिभिरपि नावबुद्धः स कथं भवेच्चीत्कारैरिति भावः १५ ५ ५ ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

निद्रामिति यदि यदा तथापि गजाक्रमणमंत्रिचीत्कारैरपि तदा संगीतमाकर्ण्य विनिद्रो जात इति शेषः अमृतं अमृतवन्मधुरं परममत्युत्कृष्टलक्ष्मि १५ कुंभकर्णो
त्थापनभिया वानरानवलोक्याति सदयो मारुतिः आशीरनुवदति जृंभेति रामचंद्रः पायात् किंभूतः जृंभासंभारेण जृंभातिशयेन भीमं यत् भ्रुकुटितटं तेन सह
नटत् आविर्भवत् कुंभकर्णाट्टहासस्तस्य व्यासेन विस्तरेण युक्तो यो व्याकोशोंतरालस्तद्युक्तं यद्वक्त्रं तस्य व्यतिकरेण किमिदमित्यज्ञानेन चकिता ये प्राणिन

कुंभकर्णः निद्रां तथापि न जहौ यदि कुंभकर्णः श्रीकंठलब्धवर किन्नरकामिनीनाम् गंधर्वयक्षसुरसिद्धवरांगनानामाकर्ण्य गीत
ममृतं परमं विनिद्रः १५ स्वकटके रामः जृंभासंभारभीमभ्रुकुटितटनटत्कुंभकर्णाट्टहासव्यासव्याकोशवक्त्रव्यतिकरचकित
प्राणिपुण्यप्ररोहम् लीलालोलन्मृणालीमृदुमिथिलसुतासंगभूपालहंसः पायात्सिंदूरपूर्वाचलशिखरशिरःशेखरो रामचंद्रः १६
लंकायां कुंभकर्णः सुप्तोत्थितः कवलयन्पलशैलजालं तीव्रासवं परिपिबन्नपि कुंभकर्णः नृप्तिं जगाम न तथेत्यवदत्सुरायां गंगां पिबामि
यमुनां सह सागरेण १७

स्तेषां पुण्यप्ररोहः पुण्योदयस्तद्भयनिवर्तक इति पुनः लीलायै लोलंती चंचला मृणाली पद्मिनी तद्वन्मृद्वी च या मिथिलसुता त
स्याः संगे राजहंसः यथा पद्मिनीसंगाद्राजहंसो मोदते तद्वदयमपि सीतासंगादिति भावः पुनः सिंदूरवदरुणो यः पूर्वाचल उदयगिरिस्तस्य शिखरे शिर इव शिरः
सूर्यस्तस्य शेखरः शिरोरत्नं सूर्यकुलकेतुरिति १६ सुप्तोत्थित इति पलशैलाः मांसगिरयस्तेषां जालं बहुपर्वतोच्चमांसराशिमिति तीव्रासवमतिमादकमदिरां यदा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तृषिंनजगाम तदाइत्यवदत् इतिकिंसुरायाइत्यादि १७ उपस्थितमिति तंकुंभकर्णं किंभूतम् लंकाशिरः लंकाशिखरंनिर्मितं जानुदघ्नंजानुप्रामाण्येनयस्यतम् उ
स्थितस्यलंकाशिखरंजानुप्रमाणमितिभावः प्रमाणेदघ्नादयः भोमारुते एतत्किंयंत्रमुदस्तं अष्टधातुघटितंलंकाप्रक्षेपकरणंयंत्रं यद्वा यंत्रकालउदितः किंयंत्रंका
लेक्षुचक्रयोरितिविश्वः मारुतिर्नेत्यवादीत् यंत्रंनेति चपुनः कुंभकर्णइत्यवादीत् १८ यद्यपीति सर्वत्रगासर्वतोखंडितासर्वत्रगीयतेप्रमाणीक्रियतेवा सुगमं

स्वकटकेरामः उपस्थितंवीक्ष्यतमाहरामोलंकाशिरोनिर्मितजानुदघ्नम् भोमारुतेयंत्रमुदस्तमेतत्किंनेत्यवादीत्सचकुंभकर्णः१८
कुंभकर्णःरावणसमीपभागमागम्यभोराजन् यद्यपिक्षितिपालानामाज्ञासर्वत्रगास्वयम् तथापिशास्त्रदीपेनसंचरंत्यवनीश्वराः
१९ रामायजानकींदेयेत्यभिप्रायः रावणः इदंभ्रातृवचःश्रुत्वानथेत्याहदशाननः शास्त्रनिःसंशयावाचःसतांकस्यनवल्लभाः२०
जानकींनसमर्पयामीत्यभिप्रायवान्रावणःसावज्ञम् उत्क्षिप्तस्फटिकाचलेंद्रशिखरश्रेणीनिघृष्टांगदैरेभिःपीनतरैःसुरासुरभ
यप्राप्तप्रतिष्ठैर्भुजैः संग्रामेममकुंभकर्णविजयःकिंत्वद्भुजाडंबरः प्रत्याशाशिथिलोस्म्यहंव्रजपुनःस्वापायनिद्रालयम् २१

संचरंत्यवटेसतामितिपाठे शास्त्रमेवदीपस्तस्मिन्सति असतामशास्त्रवर्तिनां अवटेगर्तारूपेमार्गेसंचरंतिसाधवइतिशेषः १९ इदमिति तथेतिशिरश्चा
लनेनांगीकारः सतांशास्त्रानुवर्तिनांशास्त्रनिःसंशयावाचः शास्त्रनिर्णयांताःवदकस्यनवल्लभाइतिवापाठःसुगमं २० उत्क्षिप्तेति उत्क्षिप्तउद्धृतोयःस्फटिका



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चलः कैलासः किंलयेतिशेषः सुगमम् २१ राजन्निति बलवांश्चासौ विद्विट् रामस्तस्य मत्सकाशात् शोकशल्यं अहमहमिकया पूर्वशौर्यप्रकटनेन. अहं पूर्वम
हं पूर्वं युद्धार्होऽहमिकामतेत्यभिधानचिंतामणौ अन्यत्सुगमम् सर्वकल्याणानां आश्रयंतां त्वामितिशेषः २२ अयीति अयीतिसंभावनायां हे कपिकुलम
ल्लाः हे कपिवराः मुधाभीताः संतः किं यात कस्माद्व्रजत तदुपपादयति नहीति अत्रयुद्धे दृष्टांतद्वयमाह जलधरपोतो मेघबालोपि अल्पतरमेघोपीत्यर्थः पोतो

कुंभकर्णोभीममालंब्य राजन्मागाविषादं परिहरबलवद्विद्विषः शोकशल्यं कल्याणान्याश्रयंतामहमहमिकयानोभवंतंजहामि
कः कालः कोविधाता किमरिकुलभयं कोयमः केचयाम्याः कोरामः केकपींद्राश्चलतिमयिरणेरोषिते कुंभकर्णे २२ रावणः सानंदं म
हाबलपराक्रमैं राक्षसभटैः परिवृतो रणप्रांगणेवतरतुवत्सः कुंभकर्णः साक्षेपं तथा कृत्वा अयिकपिकुलमल्लाः किंमुधायातभीता
नहिजगतिभवद्भिर्युध्यते कुंभकर्णः अपिजलधरपोतोलेढिकिंस्वल्पकुल्यामपिमशककुटुंबं केसरीकिंपिनष्टि २३ अपिच नाहंवाली
सुबाहुर्नचखरशिरसौ दूषणस्ताटकाहं नाहंसेतुः समुद्रे नचधनुरपि यत्त्र्यंबकस्यत्वयात्तम् रेरेरामप्रतापानलकवलमहाकालमूर्तिः कि
लाहं वीराणांमौलिशल्यः समरभुविचरः संस्थितः कुंभकर्णः २४

वार्यांनबालयोरितिहैमी कुल्याल्पाकृत्रिमासारिदित्यमरः लेढि आस्वादयति पि
नष्टि मारयति राक्षसबालोपि अल्पबलैर्वानरैर्नयुध्यते ममतुकाकथेतिभावः २३ नाहमिति खरश्चत्रिशिराश्चैतौ राक्षसजातौ आत्तं भग्नं रामस्य यः प्रतापान

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लस्तस्यग्रः कवलस्तद्ग्रहणाय महाकालरूपः अथवाग्रगर्थः बाल्यादिभिरशनपूर्तिर्नजाता मयातु रामप्रतापाग्निस्तृप्तो भविष्यतीत्याह रामप्रतापानलस्यकव
लाययो महान्कालस्तस्यमूर्तिर्रेकोस्मीति बुभुक्षितरामाग्रेरतिकालोयातस्तत्पूर्तिरद्येतिभावः २४ सुग्रीवमिति बाहुमूले कक्षायां गाढं यथास्यात्तथा निर्पी॰
ड्यपुनरचेतनंज्ञात्वा भुजेन कंठदेशेक्षिप्त्वा संदधानः सन् सानंदं यथास्यात्तथा लंकां जगाम कूर्परेण बाहुमध्यस्थानेन स्यात्कफोणिस्तुकूर्परइत्यमरः २५

ततोगगनमुत्पत्य सुग्रीवं बाहुमूले प्लवगबलपतिं कंठदेशे भुजेन क्षिप्त्वा निःपीड्य गाढं रजनिचरपुरीं संदधानोजगाम सा
नंदं कुंभकर्णस्तदनु कपिभटस्तस्य तूर्णं सकर्णघ्राणं जग्ध्वा जगाम स्वशिबिरमुदरं कूर्परेणाभिहत्य २५ कुंभकर्णः निश्वस्यो
त्सृज्य बाष्पं नयनकमलयोश्चात्मनो वारि दत्त्वा कृत्वा लंकोपगूढं सकरुणमपुनर्भाविनीत्वा त्रिशूलं क्रोधांधः कालमूर्तिः प्रलय
हुतवहांगारनेत्रो विकर्णश्छिन्नघ्राणोवतीर्णः पुनरपिसमरप्रांगणे कुंभकर्णः २६ तं दृष्ट्वाजीविनाशं गिरिवरकुहरं त्रस्तचित्ताः
कपींद्राः केचित्पादांतवात प्रचलितपवनांदोलिताः खेचरंति केचिद्दोर्दंडचंडभ्रमणनिपतिताः शोणितान्युद्गिरंति प्राणान्केचिस्र
वीराः कथमपिदधति स्फीतफूत्कारभिन्नाः २७ निश्वस्येति नयनकमलयोः सकाशात् बाष्पमुत्सृज्य आत्मनः स्वस्य वारिजलं दत्त्वा सकरुणं यथास्या
त्तथा लंकोपगूढं लंकालिंगनं कृत्वा कीदृशं लंकोपगूढं अपुनर्भावि यत् पुनर्न भवतीत्यपुनर्भावि सुगमं २६ तमिति तं अरूपं दृष्ट्वा त्रस्तचित्ताः गिरिवराणां कुहरं वि





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संचरंति गच्छंति नागलोकोथ कुहरं सुषिरं विवरं बिलमित्यमरः पादांतवातप्रचलितएवनांदोलिताः पादांतवातात् प्रचलितोवेगवान् यः पवनस्तेनांदोलिताः
संतः खेचरंति निर्गच्छंति स्फीताः वर्धिताश्चते फूत्काराश्चतैर्भिन्नाविदीर्णाः अन्यत्सुगमम् २७ उत्क्षिप्येति केनाप्यजितमित्यजयम् त्रिपुरांतकस्य रुद्रस्य शूलं रु
द्रप्रसादप्राप्तमिति कोटितडितामिवयाः प्रभास्ताभिर्घोरं दुःप्रेक्ष्यं रक्षः कर्तृ कुंभकर्णः तारापतेः सुग्रीवस्योरसि निक्षिपति सतीत्यन्वयः रघुणाश्रीरामेण तच्छिशू
लं इषुणाबाणेन निरस्तं अंतरैव खंडितम् २८ तत्क्रोधमनुवर्णयति क्रोधाग्नेरिति कुंभकर्णः क्रोधाग्नेः सकाशात् जाठरोयोग्निस्तस्मात्सकाशात्क्रो[illegible]त्क्षुधाबाधा

उत्क्षिप्य शूलमजयं त्रिपुरांतकस्य संहारकेतुमिव कोटितडित्प्रभाभिः घोरं ज्वलंतमुरसि क्षिपति स्म रक्षस्तारापतेस्तदिषुणा रघु
णानिरस्तम् २८ क्रोधाग्नेर्जाठराग्नेः कपिशिबिरगतो मुद्गरं व्याददानो वक्त्रे निक्षिप्य कोटिं कवलयति भटानुत्कटान् कुंभकर्णः कांश्चि
त्स न्ध्रापिनष्टिश्वसनसहचरा वानराः कर्णरंध्रान्निर्गच्छंत्येक एतान्पुनरपि दशनैश्चर्वितानत्ति घोरम् २९ सव्येन सांद्रशिबिरं स्वकरेण धुन्व
न्व्यात्ताननस्य कटकं तत उत्तरेण सुग्रीवमेव कपिवीरवरेषु सत्सु जग्राह कोपकलितो युधि कुंभकर्णः ३०

दितिकोटिं भटान् कोटिसंख्याकान्वानरमु
खव्यान्वक्त्रे निक्षिप्य कवलयति कपिशिबिरः कपिकटकः श्वसनसहचराः उच्छ्वाससंगिनः एके वानराः मुखस्था अपि कर्णरंध्रान्निर्गच्छंति घोरं यथा स्यात्तथा दशनखं
डितानप्येतान्कर्णद्वारान्निर्गतान्पुनरत्ति पुनश्चर्वयति अन्यत्सुगमम् २९ सव्येनेति सः कुंभकर्णः सव्येन करेण वामहस्तेन सांद्रशिबिरं निबिडावमोचनं कटकं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धुन्वन्विद्रावयन् ततोविद्रावणानंतरंउत्तरेणदक्षिणहस्तेनसुग्रीवमेवजग्राहेत्यन्वयः स्वयंरूप्यकर्तृत्वात् अन्यत्सुबोधम् ३० तातमिति तातंसुग्रीवंगारुत्मते
नगरुडपाशेनशत्रुंकुंभकर्णंमुक्तोपिकुंभकर्णहस्ताद्गलितः कपींद्रः सुग्रीवः यावन्निःश्वसितिसचेतनोभवतितावत् सकुंभकर्णः पतित्वोत्थितः सन्नरसिंहपदा
नरसिंहपाशेनअंगदमपिबबंध ३१ दग्धेति तदुभयंसुग्रीवमंगदंचग्रस्तंबद्धं स्वेनरूपेण अग्निरूपेणतदवतारत्वात् रक्षःकर्मराक्षसंदहतीति तदनुदाहमनु



नातंविलोक्यविषमस्थमथांगदस्तंगारुत्मतेनभुविपातयतिस्मशत्रुम् मुक्तोपिनिःश्वसितियावदसौकपींद्रस्तावद्बबंधनरसिंहप
दांगदंसः ३१ दग्ध्वानीलस्तदुभयमपिग्रस्तमाक्रम्यरक्षः स्कंधेमौलौश्रवणकुहरेघ्राणवक्त्रोदरेषु तीव्रज्वालोदहतिकुपितः स्वेनरूपे
णवीरःक्रव्यादोभूत्तदनुविकलःप्रोत्थितौवानरेंद्रौ ३२ लंकाशिरस्थोरावणः लंकेश्वरस्तमवलोक्यरणोज्वलंतंकादंबिनीसहचरा
मृतवारिधारा तूर्णंमुमोचतदुपर्युपलब्धसंज्ञोभोक्तुंकृतांतइवनीलनलौसदध्यौ ३३ जांबवान् दंभोलिंकुंभकर्णंगिरिमिवतरसाप
तयज्जानुबंधंकंठगाटंविरच्यस्वभुजगुरुमदंजांबवानुग्रवेषः निर्मुक्तोतावभूतामभवदथमरुत्सुष्पहृष्टिस्तदंगेगुल्फाघातेनरोषा
द्रजनिचरवरस्तन्निरस्योपतस्थौ ३४ लक्षीकृत्यक्रव्यादः कुंभकर्णः विकलोभूत ३२ एतदंतरावानरेंद्रौसुग्रीवांगदौ कादंबिनी मेघमाला तत्सहायवान्
तस्ययाअमृतवारिधारातांलब्धसंज्ञः प्राप्तचेतनः कुंभकर्णः अन्यत्सुबोधम् ३३ दंभोलिरिति उग्रवेषः कोपातिशयात् जांबवान् जानुबंधंयथास्यात्तथाजानुबं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धं जानुप्रहारं तरसा बलेन कुंभकर्णमपातयदित्यर्थः दंभोलिर्वज्रः गिरिमिव किं कृत्वा गाढं यथा स्यात्तथा कंठं विरच्य गृहीत्वा स्वभुजयोर्गुरुर्मदो यस्य अथतौ
नीलनलौ निर्मुक्तावभूतां तदंगे जांबवदंगे मरुद्भिर्मुक्ता पुष्पवृष्टिरभवत् ततो रजनिचरवरः कुंभकर्णः गुल्फाघातेन तं जांबवंतं निरस्याक्षिप्योत्तस्थौ ३४
आलक्षित इति माहेशो रुद्रावतारः हनूमान् समरेऽवतीर्य स्थानं शत्रुस्थानं जगामेत्यन्वयः किंभूतः रिपोः सकाशात् परिशंकितेन निर्भयेन रघुवरे-

आलक्षितो रघुवरेण सलक्ष्मणेन कालांतकादिव रिपोः परिशंकितेन स्थानं जगाम हनुमान्समरेवतीर्य माहेश उग्रनरसिंह
इवारुणाक्षः ३५ मैनाको मेरुशृंगस्थित इव हनुमत्पाणिपद्मे नगेंद्रः कल्पांते मंदराग्रेऽजन इव समरे मुद्गरः कुंभकर्णे अद्रिं क्रव्याद
वीरः प्रहितमनिलजेनाच्छिनन्मुद्गरेण लांगूलेनांजनेयो द्रुतजनितरुषा मुद्गरं द्राक् चकर्ष ३६ रामः अत्रांतरे रघुपतिः शरयु
ग्ममैंद्रं द्राक् कुंभकर्णनिधनाय रणे मुमोच भित्वा बिभेद तद्धृदयं धरणीमथैको मूर्धानमुद्धृतमखंडयदस्य चान्यः ३७

ण आलक्षित आलोकितः परिवर्जने यद्वा रिपोः परितः शंका इता यस्मात्तेन कस्मादिव कालांतकादिव कालः प्रलयस्तत्कर्तुरंतकादिव उग्रश्चासौ नृसिंहश्च
क्रुद्धनरसिंह इव ३५ मैनाक इति हनुमत्पाणिपद्मे नगेंद्रः गिरिरिव भातीति शेषः क्व समरे कल्पांते कल्पानामतिसमर्थानामपि अंतो यस्मिन्मंदराग्रे मंदरशि
रसि अमृतमंथनार्थं मंदराक्रमणार्थं अजनो भगवानिव कुंभकर्णे मुद्गर इति शेषं सुबोधं ३६ अत्रांतर इति ऐंद्रं इंद्रप्रदत्तं द्राक् शीघ्रं शरद्वयं कृत्यमाह भित्वेत्यादिपद
द्वयेन सुबोधं ३७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उद्यदिति तुहिनेउत्तरभागेहिमवदभ्यर्णे यदंभसि यस्य मूर्ध्निकपालस्थजले पुच्छनिकृतः हनुमत्पुच्छताडितः ३८ अथलक्ष्मणोरामवीर्यमधिकृत्यकबंधम
नुवर्णयति देवाइति प्रतिनिधिस्तुल्यः सर्वमेवसुबोधम् ३९ उत्क्रांतोपीति स्वदेहात् राक्षसांतरात् उत्क्रांतः उद्गतोपि अप्सरोभिर्वरणार्थमाकृष्यमाणोपिविमा



हनूमान् उद्यन्मरुत्तनयचंडचपेटघातान्मूर्धापपाततुहिनेरजनीचरस्य भग्नोभविष्यतियदंभसिभीमसेनोबभ्रामपुच्छनिकृ
त्तोगगनेकबंधः ३८ देवाः सर्वेविमानान्यपनयतरवेः स्यंदनोयातुदूरं रेरेशाखामृगेंद्राः परिहरतरणप्रांगणंराक्षसाश्च वज्रत्रस्तांज
नाद्रिप्रतिनिधिरवधिः सर्वविस्मापकानांलंकातंकैकहेतुर्निपततिनभसः कौंभकर्णः कबंधः ३९ मृतः कुंभकर्णः उत्क्रांतोपिस्वदेहा
त्प्रवरसुरवधूदोर्भिराकृष्यमाणः प्राणत्राणायभर्तुः पुनरपिसमरापेक्षयानारुरोह संगीतैर्नारदाद्यैर्मृदुमुरजरवैः स्तूयमानोविमा
नंवीरः संग्रामधीरः शिवशिवसकथंवर्ण्यतेकुंभकर्णः ४० लंकाशिखरस्थोरावणः सविस्मयं मरुच्चंद्रादित्याः शतमखमुखाश्लेक
तुभुजः पुरद्वारेयस्याः सभयमुपसर्पंत्यनुदिनं प्रकोपव्याकंपाधरनटपुटैर्वानरभटैः समाक्रांतासेयंशिवशिवदशग्रीवनगरी ४१

नंनारुरोहेत्यन्वयः अनारोहणेहेतुः भर्तुः रावणस्य प्राणरक्षणाय पुनरपि संग्रामेच्छयेति नारदाद्यैर्नारदमुखैर्गंधर्वैः कीदृशैः सुष्टुगीतानियेषांतैः ४० मरुदितितेप्रसि-
द्धः इंद्रः मुखमिवमुखंयेषांते यस्याः लंकायाः पुरद्वारेबहिर्द्वारे पुरद्वारंतुगोपुरमित्यमरः समाक्रांतासर्वतोवरुद्धा प्रकृष्टकोपेनयोव्याकंपः विशेषेणासमंततस्तद्युक्तानि अ
धरपुटनटानियेषांतैः ४१



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इतिश्रीहनुमन्नाटकटीकायांकुंभकर्णवधोनामएकादशोंऽकः ११ सेनामुखंतुनासीरंइत्यमरः नाहमिति अहंआत्मनिसौमित्रिंप्रति योमदीयः कोपस्तस्या-
ल्पमपिकारणंनजाने येनैनंउपहन्यामीतिननुचेत्त्वयिकारणंनास्तितर्हिसौकथंरुष्टस्तत्राह चंचलबुद्धीनांलक्ष्मणसदृशानांस्नेहकोपावकारणौनिर्निमि
त्तौ यद्वा अः विष्णुःतत्प्रेरितौयद्वायमर्थः नूनमिति ज्ञात्वाचलबुद्धीनामसमीक्ष्यकर्तॄणांमादृशांस्नेहकोपौ अकारणौविष्णुनिमित्तौ तस्यशुभाशुभकर्तृ:

इतिश्रीहनुमन्नाटकेकुंभकर्णवधोनामएकादशोंऽकः ११ रावणः सक्रोधम् तूर्णंपूर्णकटकंपुत्रमिंद्रजितंदुष्करसमरयज्ञे
अध्वर्युंवृणोतिस्म इंद्रजित्सत्वरंकुंभकर्णवधामर्षमूर्च्छितः सीतापतिवधेबद्धलक्ष्यः समरचत्वरेऽवतीर्णः इतोलक्ष्मणोधनु
र्गुणटणत्कारैर्धरणिगगनांतरमापूरयन्कोपानलज्वालावलीभिः सलंकाधिपांलंकांकवलयन्घोरसमरनासीरेऽवतरतिस्मरावणिःल
क्ष्मणमवलोक्य नाहंसौमित्रिकोपस्यजानेल्पमपिकारणं नूनंचंचलबुद्धीनांस्नेहकोपावकारणौ १ अपिच क्षुद्राः संत्राससमेतेविज
हतहरयोभिन्नशक्रेणकुंभायुष्मद्देहेषुलज्जांदधतिपरममीसायकानिष्पतंतः सौमित्रेतिष्ठपात्रंत्वमसिममरुषांनन्वहंमेघनादः किं-
चिद्भ्रूभंगलीलानियमितजलधिंराममन्वेषयामि २ त्वात् १ क्षुद्राइति क्षुद्राअल्पतराः हरयोपिवानराः एनंमदुपस्थितंसंत्रासंविजहत त्यजत कुतइत्य
तआह युष्मद्देहेष्विति लज्जावत्वेनिमित्तमाह भिन्नेति हे सौमित्रेत्वमपितिष्ठ रणादुपरम कुतइत्यतआह ममरुषांपात्रंनासीति तर्हिकिंकरिष्यसिइत्यतआह राममिति



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सुग्रीवेति सुग्रीवादयस्तं रावणिं नोपश्यंति समेघनादः घोरैर्बाणैस्तान् सुग्रीवादीन् प्रहरतिस्मेत्यन्वयः अदर्शनेहेतुमाह बाष्पजलकणाः अंधकारश्च तद्युक्तेन ज
लदेनांतरितं आच्छादितं बाष्पोजलकणेबाष्पंनेत्रवारिणिचाप्यथइतिधरणिः ३ मायेति कालजलदस्य प्रलयमेघस्येवध्वनिर्यस्यसः फणिपाशोनागपाशः तदात्
तैर्नागपाशात्मकैरिति तौरामलक्ष्मणौ अपातयत् बबंध वागर्थः शक्रः पविना मेरुमंदरगिरीइव तौरामलक्ष्मणौ अपातयत् पातयामासेत्यर्थः अहोकिमर्थैव्ययम्

सुग्रीवमारुतिनलांगदनीलमुख्या बाष्पांधकारजलदांतरितंप्रचंडम् तंरावणिंजलदमंडलमांस्थितंनोपश्यंतितान्प्रहरतिस्मस
घोरबाणैः ३ मायारथंसमधिरुह्य नभस्स्थलस्थोगंभीरकाल जलदध्वनिरुज्जगर्ज बाणैरपातयदहोफणिपाशबद्धैस्तौमेरुमंद
रगिरीपविनेवशक्रः ४ अत्रांतरे पूर्ववैरमनुस्मरंतीचक्रवाकीसरोवरस्था शशापयोमेदयितंसरामः सलक्ष्मणोरावणिबाणजालैः
रणेहतोयंमुदमुद्वहंतीचंद्रोदयेनृत्यतिचक्रवाकी ५ सरमा श्रुत्वाहतिंदशरथात्मजयोर्विमानमारुह्य पुष्पकमवाप्यदशानन
स्य आज्ञांनिनायसरमाजनकस्यपुत्रींसीताविदीर्णहृदयासिदिवंगतासि ६ ४ शशापयोमेइतिपद्यंकस्यापिसमस्यारूपं अत्रानुपयुक्तम्
५ श्रुत्वेति हतिंबंधनं दशाननस्याज्ञामवाप्यजनकपुत्रींपुष्पकंविमानमारुह्य गतासिसादरंयथास्यात्तथा खड्गक्षेपनयोरसिरितिधरणिः गतआक्षेपोयत्रतत्
असिदिवंनिनाय असियुक्तादिवंसंग्रामभूमिंनिनाय द्यौस्स्त्रियांरणनाकयोरितिहलायुधः असिपदेनातिभीषणत्वमुक्तम् किंभूतासरमा सीतार्थविदी

अंक
१२

८५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

र्णंत्हृदयंयस्याः सासरमागतासि सादरंयथास्यात्तथा असिदिवंयज्जयादियुक्त रणंनिनाय मायया प्रापेतिवाक्यार्थः ६ किमिति अहहेतिखेदे भार्गवा-
दीनांसावाणी अनृताजाता साकायालयासह मे मांप्रति कर्मणिषष्ठीइति आलापिताइतिका सीतेत्वंसधवास्याः नकदाचिद्विधवात्वंप्राप्नुहीति कुतइत्य
पेक्षायामाह कीदृशी मग्नौचतौन्चूचुकौच एवंभूतौकुचौयस्याःसा उक्तंच आभोगमग्नशिरसौयस्याःस्तः सततंकुचौ सानारीसधवानित्यंनकदाचित्तद्वि

जानकी किंभार्गवच्यवनगौतमकाश्यपानांवाणीवसिष्ठमुनिलोमशकौशिकानां जातानृताप्यहहपालयितात्वयामेस्यान्म
ग्नचूचुककुचांसधवेतिराम ७ हाराघवप्रियतमस्फुरतीहरामोबाहुस्तथानयनमप्यनृतंकिमेतत् नाद्यापियन्मधुरनिर्मलदृष्टि
पातैःसंभावयस्यपिविलासगिराभुजाभ्याम् ८ उक्तंचयतः संमानितापिनतथामुदमभ्युपैतिमात्रानुजेनजनकेनतथाग्रजेन आ
श्वासितापिरमणीरमणेनतूर्णंप्रेम्णायथामधुरनिर्मलदृष्टिपातैः ९ प्राणेश्वरःप्रतिगिरंनददातिरामो हावत्सलक्ष्मणममापनये
नरुष्टः मद्वत्सलस्त्वमपिनोत्तरमाददासि भ्रांत्वाभुवंममकृतेऽथदिवंगतोवा १०

येतिबहवः ७ साभवतुनामानृताशकुनोप्यनृतइत्या
ह हेति बाह्वादिकमप्यनृतंकथंजातमित्यतआह अद्यापि एतावन्मयोक्ते सतिनिर्मलदृष्टिपातैर्मांनसंभावयसि नसुखयसीति ८ उक्तंच यतइति ९
राममुक्त्वालक्ष्मणमुपालभते प्राणेश्वरइति हाकष्टंवत्सलक्ष्मणममापनयोनयाभावस्तेनरुष्टः प्राणेश्वरोरामः प्रत्युत्तरंनददाति रक्षोहस्तगतायाः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्राणधारणमनघः महूत्सलस्त्वमपिमातृस्नेहवान् त्वमप्युत्तरंनददासितन्मयाज्ञातं ध्रुवंपत्नींत्वाममकृतेदिवंगतोवाचितर्के १० प्राणेति हेप्राणाः यावत्
माइतिमांस्वर्गेप्यनवलोक्यतोइमौरामलक्ष्मणौस्वर्गाद्ब्रह्मलोकंनाधिगच्छतः नव्रजतः तावज्झटितिशीघ्रंयूयमितिशेषः दिवंव्रजतेत्यन्वयः एवमुक्तेसति
साधुगिरासीतेंविषादंमाकार्षीरयंजीविष्यतीतिसरमोक्त्यासंगरेणसंग्रामेणसहजनकजाश्वासानिलंमुमोच उच्छ्वासंत्यक्तवतीरामावलोकनंचकारेतिभावः

स्वर्गाद्दिमौझटितिमानवलोकयंतौनब्रह्मलोकमधिगच्छतएवतावत् प्राणादिवंव्रजतसाधुगिरामुमोचश्वासानिलंजनक
जासहसंगरेण १० समरादपतत्तनंविमानंसरमयारावण भयादित्यभिप्रायः अत्रवैकुंठाद्गरुडः हाहाकारंनिशम्यत्रिभुव
नविदितंरावणेःकर्मघोरंक्रोधाग्नेर्धूमधारीदलितरिपुकुलंत्रासयन् राक्षसेंद्रम् पक्षाघातप्रचंडप्रचलितपवनध्वस्तशैलेंद्र
पातैःसंप्राप्तोवेनतेयःस्रवदमृतरसोजीवयामाससरामम् १२ रावणिःसभयंरणसंकटमुपलभ्यसप्रपंचं पापोविरच्यसमरेज
नकस्यपुत्रींहारामरामरमणेतिगिरंगिरंतीम् खड्गेनपश्यतवदन्नितिरेप्रवीरामायामयींशिवशिवेंद्रजिदाजघान १३

हेति क्रोधाग्नेःसकाशात् याधूमधारीधूमातिशयस्तेनदलितंरिपुकुलंयेन तृतीयचरणार्थेनराक्षसेंद्रंत्रासयत् स्रवदमृतरसइनिजीवनायगर्भितोहेतुः वागर्थः
राममनुलक्षीकृत्यदृस्वेत्यर्थः रामंदृष्ट्वास्वयंसचेतनोभूदित्यर्थः तदवमानश्रवणाच्चेतनत्वात् १२ रामसंजीवनात्सर्वान्जीवयामासेत्यर्थः रावणिःसभयंरण



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

संकटमुपलक्ष्य संप्राप्य रेवीशः पश्यत इतिवदन्सन् इंद्रजित् मेघनादः अन्यत्सुगमम् १३ द्विधेति ब्रह्मवेदस्तस्योपदेशात् अथर्वणमंत्रोपदेशात् यद्वा ब्रह्मा
प्रजापतिस्तस्याज्ञातः वक्ष्यमाणशक्तित्वात् निकुंभिलः त्रिकूटांतःपातिगिरिः अवटंकुंडं तत्राभिचारकर्मणा मायारथमुत्पादयितुंजगामेत्यभिप्रायः १४
दृष्ट्वेति गुर्वींमूर्च्छामासाद्यदीर्णरामशोकात्सीताखंडनाद्वादीर्णंविदलितंसीतापुत्रित्वाभिमानात् गिरंवेदवाणींनस्मरसि अजोनित्यः शाश्वतोयंपुराण

द्विधाकृतांतांपुनराददानोमायारथस्थोंबरवर्त्मनाच ब्रह्मोपदेशात्सनिकुंभिलाद्रेर्न्यग्रोधमूलावटमाजगाम १४ समरचलरेरा
मः दृष्ट्वामायाजनकतनयाखंडनंरामचंद्रोगुर्वींमुर्वीतलमुपगतोदीर्णमासाद्यमूर्च्छाम् तस्मादाग्रेपुनरनुजनिश्चेतनांप्राप्यरामंकृत्वो
त्संगेस्मरसिनगिरंव्याहरन्नित्यरोदीत् १५ लक्ष्मणः सिंचत्येनंविकचनलिनीगर्भनिर्मुक्तवारांधारासारैर्मलयजरसैरामधर्मोऽप्रमा
णम् यस्मादेतांत्वमपिपदवीमास्थितोब्रह्मशापादित्यालापैर्विलपतिदशालक्ष्मणश्चक्रवाक्याः १६

इतिस्मरणात् जामदग्न्याद्वत्तमुग्धत्व
रूपंवा १५ सिंचेति मलयजरसैश्चंदनोदकैः पुष्पितकमलमकरंदयुक्ताः याः वारास्तासांधारैवसारोयेषुतैः रामंसिंचनिवियोगतापशांत्यर्थमितिभावः दृशाहेतु
ना रामदुःखसंदर्शनात्सानंदंचक्रवाकीक्षणंविलापहेतुः कुतः यस्मात्त्वयापीश्वरोप्यतिधार्मिकोपिएतांपदवींमूर्च्छनरूपांब्रह्मशापात्त्वंमुग्धोभवेतिजामदग्न्यवचन
दास्थितः अतः धर्मोऽप्रमाणंशापएवप्रमाणमिति अत्रगुर्वाज्ञापालनंधर्मस्तत्कृतेपिदुःखावगमात् धर्मेप्रामाण्यमिति १६ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१७ कुंडेइति शक्रेभकुंभदलनः मेघनादः अर्धचंद्राकारेकुंडेपलंस्वमांसमितिज्ञातव्यम् तरसाबलेन १८ दोस्तंभेति घोरांधकारः आत्मीयानीकांतर्यरूपध्वां
तः सौमित्रिः रावणस्यपाणियुग्मेमेघनादस्यदृढशिरः छित्वाचिक्षेपेत्यन्वयः सर्वाजेयत्वमत्रदृढत्वम् कीदृशंदृढशिरः साद्रिसमुत्कटं वज्रैरेवसमाकीर्णमुक्



सायथा एकेनाक्ष्णाप्रविततरुषावीक्षते व्योमसंस्थंभानोर्बिंबंसजलगलितेनापरेणात्मकांतम् अन्हश्छेदेदयितविरहाशंकि
नीचक्रवाकीद्वौसंकीर्णौविसृजतिरसौरौद्रकारुण्यसंज्ञौ १७ तत्रनिकुंभिलाद्रौन्यग्रोधमूलेवटेरावणिः सत्वरम् कुंडेबिभीत
कसमिद्भिरस्थार्धचंद्रेशक्रेभकुंभदलनः पलमाजुहावहनूमान् शत्रुंजयेरथवरेऽर्धसमुद्भूतेऽग्नेर्यज्ञंबभंजतरसाहनुमानुपेत्य
१८ रंगप्रांगणेलक्ष्मणः शनैश्चरादाप्यदशरथेनार्पितं संहारास्त्रमनुस्मृत्य सानंदं शोकमपहायरेरेमायारथ्यारूढप्रौढबाहुशा-
लिन्मेघनादमायांविभिद्यत्वांयमलोकंप्रस्थापयामि पश्यदोस्तंभास्फालकेलिस्फुटविकटरवध्वस्तघोरांधकारः संहारास्त्रंनियोज्य
स्वधनुषिधरणीपाणिनाहत्यवीरः क्रोधांधोरावणस्यज्वलदनलशिखामुद्गिरन्पाणियुग्मेऽस्थित्वाचिक्षेपसौमित्रिरथदृढशिरो
मेघनादस्यसाद्रि १९ इतिहनुमन्नाटकेइंद्रजिद्वधोनामद्वादशोंऽकः १२ टंसाद्रिरुच्यते इत्यलंकृतिरुक्तौ अन्यत्सुगमम् १९ इति-



श्रीमिश्रमोहनदासविरचितहनुमन्नाटकदीपिकायांइंद्रजिद्वधोनामद्वादशोंऽकः १२ लंकेति चक्रंसमूहः दशवदनत्वात् अर्धपथेअंतरैव तरसाबलेन

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

एकवीरघातिनी एकस्यासाधारणस्य वीरस्य निधनं यतः सकाशात् १ नितरां हनिष्यति आक्षिपति गुरोराक्षेपो हननातिरिक्त इत्युक्तत्वात् द्रागिति द्राक् शीघ्रं भंगो त्रावमाननं कीदृशात् समरतः लंकापतेर्दत्ताः करतलप्रहाराः यस्मिन् तस्मात् केनापि मिषेण स्थानांतरं विधेर्ब्रह्मणः संबंधिनी वा अत्रेयं कथा तुष्टेन ब्रह्मणा ऽ स्मै-

सक्रोधं लंकेश्वरः सुतवधारुणवक्त्रचक्रस्तत्रैकवीरनिधनां क्षिपति स्म शक्तिम् सौमित्रिवक्षसि रुचा ऽङ्घ्रिपयेज्वलंतीं क्षिप्तां बु
धौ हनुमता तरसा गृहीत्वा १ रावणः शक्तिग्रहणमवलोक्य सक्रोधं ब्रह्माणं हंतुमुद्यतः ब्रह्मा सभयं नारदं सस्मार प्रविश्य
नारदः तात किमिति स्मृतोहं ब्रह्मा वत्स यावन्मारुतिः समरभूमौ तावदेकवीरघातिनी शक्तिर्लक्ष्मणं न भिनत्ति तस्मिन्पुनरभिन्ने
लंकेश्वरो मां नितरां हनिष्यतीति मत्वा समरतः पवनसूनुः स्थानांतरं नेयः नारदः यदाज्ञापयति तात इति निष्क्रम्य द्राक् नारदोथ पि
तृभंगभयादनैषीत्स्थानांतरं समरतः पवनस्य सूनुं लंकापतेर्दत्तचपेटभवत्प्रहाराज्जयाह रामरिपुरत्र विधेस्तु शक्तिं २ रावणः दृष्ट्वा
शक्तिग्रहणमधिकं राक्षसेंद्रं कृतां तत्क्रोधाध्मातं ज्वलितदृदयाग्निस्फुलिंगोग्रवेषः तामेव स्म क्षिपति निधने लक्ष्मणस्योग्रमंत्रैर्भि
त्वा वक्षस्थलमपि गता भूतलं कूर्मराजं ३ शक्तिर्दत्ता अनया मुक्तया मनुष्यवीरो नश्यतीति २ दृष्ट्वेति रावणः राक्षसेंद्रोधिकं यथा स्यात्तथा कृतां

तस्यैव क्रोधस्तेनाध्मातो भर्जितश्चासौ ज्वलितो दृदयाग्निश्च तस्य स्फुलिंगास्तत्सदृशैर्नेत्रादिभिरुग्रो वेषो यस्य एवंभूतो यातः किं कृत्वा हनुमता कृतं स्व शक्ति

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ग्रहणंदृष्ट्वा अतएवोग्रमंत्रैः कृत्वालक्ष्मणनिधनेतन्निधननिमित्तंशक्तिंक्षिपतिस्म शक्तिमितिशेषः सापिलक्ष्मणवक्षस्थलंभित्वाभूतलंप्रतिकूर्मराजंगताबिभे
देत्यर्थः भूतलभेदनेनकूर्मराजस्यचर्मतथाकूर्मभेदनमाक्षिप्यतेननुवास्तवमितिभावः ३ तदेवभेदेनप्रकारंविवृणोति शक्तिरिति कोपमानाद्रावणात्प्र
काशाद्भुजगपतिपुरंजगामेत्यन्वयः किंभूता प्रौढानियान्युग्राणितेजांसितैः प्रलयायवीरक्षयायसमुदितायेवीरप्रौढाः शौर्यगर्वितास्तेषामुग्रतेजसां

शक्तिःप्रौढोग्रतेजःप्रलयसमुदिताद्रावणात्कोपमानाद्गर्जंतीदीपयंतीज्वलितदशदिशोलक्ष्मणंवेधयंती हाहाकारप्रला
पंसकलजनभवंदेवदैत्येंद्रकंपंब्रह्माद्यैःस्तूयमानाभुजगपतिपुरंकारयंतीजगाम ४ अत्रांतरेस्थानांतरादागत्यहनुमतापश्चात्तापगतेबिभीषणबलेक्षीणेप्लवंगेश्वरेमूढेजांबवतिप्लवंगमगणेसंभूयभूयस्थिते शक्तिप्रौढमहाप्रहारविधुरेमूर्च्छांगतेलक्ष्मणेहारामेविलपत्यहोहनुमताप्रोक्तंस्थिरैःस्थीयताम् ५ अथबिभीषणः रात्रौज्वलदुल्मुकंकरेकृत्वाशिबिरंपर्यटन्प्रौढशक्तिज्वालावलीकावलितान्वानरान्पश्यतिस्मकोजीवतिनवेतितत्रजांबवंतमेवापश्यत् उपविष्टंमूर्च्छारहितंनान्यंजांबवान् बिभीषणं

प्रलयायेत्यर्थः देवदैत्येंद्रकंपंयथास्यात्तथासकलजनभवंहाहाकारयुक्तंप्रलापंकारयंती भुजगपतिपुरंकीदृशंब्रह्माद्यैःस्थिरोभवेत्यादिवाक्यैःस्तूयमानं ४ प्रोक्तंरा
वणाहतलक्ष्मणाः वयंकथंकवायास्यामइतिपश्चात्तापःभूयःपुनरपिअसंभूयआगोचरीभूयस्थितेसतिअत्रवानराएवनसंतीत्येवास्थितेस्थिरैःस्थीयतांधैर्यमवलंब्यस्थी
यतां अन्यत्सुबोधम् ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अंजनीति येन हनूमता अजनी माता सुप्रजासत्सुत्रवतीतु पुनः मातरिश्वा वायुः सुप्रजाः सत्सुत्रवानिति योज्यम् पुंस्त्वेविसर्गलोपः ६ नैवेति आर्येण भवतायथापरः स्नेहः वायुसुतेदर्शितस्तथानान्येष्विति किं ७ अत्यद्भूतरणेराज्यादिकंनापेक्ष्यं बलशौर्यादिकमेवापेक्ष्यमिति भावः एतेनहनूमतः शौ

अंजनीसुप्रजायेनमातरिश्वातुराक्षस हनूमान्वानरश्रेष्ठः कामंजीवतिवानवा ६ बिभीषणः नैवराजनिसुग्रीवेनैवरामेनचांगदे आर्येणदर्शितः स्नेहोयथावायुसुतेपरः ७ जांबवान् भोराक्षसेंद्रबिभीषण तस्मिन्जीवतिदुर्धर्षेहतमप्यहतंबलम् हनूमति गतप्राणेजीवंतोपिहतावयम् ८ ततः सत्वरंजांबवतासहबिभीषणः पृष्ठोपस्थितंमारुतिंविलपंतंरामचंद्रमनुस्मरति रामःबिभीषणमवलोक्य गिरीन्यास्यंत्यमीवीरास्त्वयिवत्सदिवंगते मरिष्यामिससीतोहंकयास्यतिबिभीषणः ९ भुक्तेमयिप्रथममत्सिफलानिवत्ससुप्तेकरोषिशयनंमयिजीवतित्वम् प्राणाञ्जहासिसुरलोकसुखायकिंवासापत्नभावमहहप्रकटीकरोषि १० इतितारस्वरैःरुदंति रामः हावत्सलक्ष्मणधिगस्तुसमीरसूनुंयस्त्वांरणेपिपरिरक्षत्यपराङ्मुखोभूत् गोपायतीहभरतस्तुममानुजःकिंयस्त्वामधिज्यधनुरुद्धतशक्तिपातात् ११

र्यातिशयप्रश्नः ८ गिरीनितिसुबोधं ९ भुक्ते इति कृतभोजनेमयिजीवतित्वंप्राणान्जहासि तत्किंवितर्केवितर्कद्वयंद्योतयति वनवासादिक्लेशभीतःसन् सुरलोकसुखाय अथवासापत्नभावंप्रकटीकरोषिकिं अत्रमहासहायोनश्यत्विति सपत्नस्यशत्रोर्भावः सापत्नंतस्यभावविकारः सापत्नभावः १०

११

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

उत्प्लुत्यवंदनंगारुडस्थानम् यदंबरंसमारुत्यविक्रमाविष्कृतोस्फुटम् दैन्यकोपातिशयतोवंदनंगारुडंमतमितिहेभोसप्तेति गोत्राचलाः भूविभागगिरिवराः द्वीपप
र्वताइति एतावंतंएवपरिमाणमात्रोयः कटकोविस्तारोयस्यतस्मिन् ब्रह्मांडरूपभांडकोशे तत्रतावत्सप्ताब्धिगिरिद्वीपभुवनादीनांमात्रैवनत्वानंत्यमितिभावः विस्तारेक

गत्यं अलमस्मद्वृथायौवनशस्त्रभरेणेति सशरंधनुस्त्यक्तुमिच्छति हनूमान्निजापराधेनसकरुणंभरतबाहुवर्णनाकर्णनेनसाभ्य
सूयंसत्वरंगारुडस्थानमभिनीयरामपुरतःस्थित्वा देवपश्य सप्तांभोनिधयोदशैवचदिशःसप्तैवगोत्राचलाः पृथ्व्यादीनिचतुर्दशैवभु
वनान्येकंनभोमंडलं एतावत्परिमाणभाजिकटकेब्रह्मांडभांडोदरेक्वासौयास्यतिराक्षसोरघुपतेकिंकार्मुकंत्यज्यते १२ रामः भोमारुते
तथापिमामुन्मथ्यजागर्तिलंकाभटः हनूमान्देवपश्य नीचैःसहमैत्रीनकर्तव्या यतः खलःकरोतिदुर्वृत्तंनूनंपततिसाधुषु दशाननो
हरत्सीतांबंधनंस्यान्महोदधेः १३ दैवादप्युत्तमानांपरिहरतियदादुर्जनोवाकथंचिन्मानंनाप्नोतितेषामनुजनितगुणानेवकुत्राधिक-
त्वम् स्वर्भानुर्भानवीयान्हरतियदिपुनःशीतरश्मेर्मरीचीन्ब्रह्मांडस्येहखंडेतदपिरघुपतेकिंग्रहेशत्वमेति १४ टकः पुमानितिधनंजयः १२ १३

दैवादिति अत्रनिषेधेवाशब्दः पूर्वंतुसतांमानः अनाहार्यएव यदायदि तत्रापिकश्चिदेकवारंनासकृत् तत्रापिदैवात् तत्रापिदुर्जनउत्तमानांमानमपहरति तदातेषां
सतांअनुजन्मानः अनुक्षणंपश्चाज्जनिताः उत्पादिताःगुणास्तानेवनाप्नोति यत्तेष्वधिकंहेयोपादेयतयागृहीतंगुणंकुत्रकुतःप्राप्नोति नकुतोपि तत्रदृष्टांतयति





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्वर्भानुः राहुः भानवीयान् मरीचीन् शीतरश्मेश्च हरति आच्छादयति तर्हि इहापि ब्रह्मांडस्य खंडे रोदस्यां किं ग्रहेशत्वमेति नैतीत्यर्थः एवं रावणेनापि
दैवान्मानउन्मथितः तर्हि किं भवत्सादृश्यं गतइति भावः १४ किंतयेति कालांतरगतश्रिया कालांतरे गताश्रीस्तया १५ पातालतइति किमत्रवितर्के अहं

रामः अयेहनूमन् किंतया क्रियते वीर कालांतरगतश्रिया अरयोयां न पश्यंति बंधुभिर्वा न भुज्यते १५ हनूमान् लक्ष्मणं विषम
स्थितमवलोक्य लक्ष्मणवक्षोभिन्नं दृष्ट्वा हनूमान्सविस्मयोरामं हनूमति कृतप्रतिज्ञे दैवमदैवं यमोप्ययमः पुनर्दैवपश्य पातालतः किं
मुसुधारसमानयाभिनिष्पीड्य चंद्रममृतं किमुताहरामि उद्दंडचंडकिरणं ननु वारयामि कीनाशपाशमनिशं किमु चूर्णयामि १६ रामः
आत्मगतम् यद्यदुक्तमनेन महावीरेण तत्तदिदानीमेव कृत्वा दर्शयति परंतु तत्करणादकालेपि महाप्रलयः स्यादिति विचार्य प्रत्या
ह वैद्यं सुषेणमधुनैव तदानय त्वं लंकापतेरनुचरोपि यतो भिषक्सः नैवान्यथा वदति रामगिरा हनूमान्पर्यंकसुप्तमचिरेण तमानि
नाय १७ सुप्तोत्थितं रघुपतिर्भिषजां वरिष्ठं पप्रच्छ तं सकरुणं तरुणोपचारं सव्याजहारहिमरश्मिरुचा रजन्यां जीवत्यसौ द्रुहिणशैल
विशल्यवल्या १८

उद्दंडोरावणः उत्धृतोदंडोयस्य एकं वापदं कीनाशोयमः १६ वैद्यमिति तत्तस्माद्दैव शत्रावेव सुषेणाख्यं वैद्यमानय ननु वैरिभृत्यः क
थमानीयतामत आह यत्नो सौभिषक् वैद्यः शत्रोरप्यन्यथा न वदति इति रामगिरा पर्यंकसहितमेव शीघ्रमानीतवान् १७ सुप्तेति तरुणोपचारं शीघ्रविशल्यकरणी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नामवल्या सः वैद्यः रजन्यामेवनतुदिवा तत्रापिहिमरश्मिरुच्चैर्वनतमसि तत्रापिद्रुहिणशैलेयाविशल्यवल्लीतयैवनान्यपाजीवति १८ नलइति त्रिरात्र्यव
छिन्नंकालं एकरात्रमहोरात्रमितिज्ञेयं सर्वत्रैवम् १९ तत्रात्मजवेनोत्तार्यवक्तुंतद्देशावधिमाह नीत्वेति इतः स्थानात् द्रुहिणगिरियोजनानांलक्षाणांषष्टिः

तत्ररामेणाहूताः वानरभटाः द्रुहिणाद्रिगमनायरामपुरतः स्वस्वपराक्रमानुरूपंसमयावधिमूचुः नलस्त्रिरात्रंपुनरेतिगत्वात
त्रैवमैंदद्विविदौद्विरात्रं सुग्रीवनीलौपुनरेकरात्रंवीरोंगदोयामचतुष्टयेन १९ रामःसभयं आर्तःसंकुचितमुखकमलः समरसं
कटेभगवतोरुद्रावतारस्यमारुतेःसाशंकंमुखकमलविकाशंपश्यतिहनूमान्सत्वरंसकरुणंगारुडस्थानमास्थायांजलिपुटमभिनी
यदेवक्षणंस्तभ्यतामात्माथावदेनंभिषक्कचकचूडामणिंलंकांप्रवेश्यागच्छामितथाकृत्वा नीत्वालंकांसुषेणंपुनरनिलसुतः प्रार्थया
मासरामंदेवाज्ञांदेहिवीरास्त्ववहितकरणोपस्थिताःसंतिसर्वे लक्षाणांषष्टिरास्तेद्रुहिणगिरिरितोयोजनानांहनूमान्तैलाग्नेःस
र्षपस्यस्फुटनखपरस्तत्रगत्वात्रचैमि २० रामःसहर्षंतथाकरोतुवीरः हनूमान् षष्टिलक्षयोजनपरिमितोस्तीत्यर्थः अतिदूरश्रवणात् वि
चिकित्संतंप्रत्याह अहंतत्रगिरौगत्वायामिआगच्छामि ननुकदागच्छसीत्यतआह किंविशिष्टः तैलाग्नेर्दीपवर्तिज्वालायाः सकाशात्सर्षपस्यगौरराजिका
याःस्फुटनंसएवपरःअवधिर्यस्य यावद्दीप्ताग्नौसर्षपःस्फुटति तावद्गत्वागच्छामीतितात्पर्यम् २० ५ ५ ५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ध्यात्वेति आत्मानं वायुरूपिणं रुद्ररूपं वातस्य रामस्य वाक्यमिति संदेशं नीत्वा इति किं अयोध्यामित्यादि अखिल कुशलतां समस्तस्वकीयकुशलतां अथत
त्प्रयाणानंतरं लक्ष्मणस्य जननी इति स्वप्नमुपलक्ष्य दृष्ट्वा उत्तस्थुषी उत्थितवती इति किं व्यालः सर्पः समूलं वामं भुजं कवलयति २१ प्रेति सा सुमित्रा साक्रोश
त्या मुनिः स्वमज्ञानवान् स चासौ वसिष्ठः पुरोहितश्च मुनिर्वसिष्ठः २२ द्रोणोनाम्ना द्रुहिणगिरिरिति ज्ञेयम् दृष्ट्वेति तत्र शैले सर्वा वल्लीः रत्नानि दृष्ट्वा किंभूता

ध्यात्वात्मानं प्रणम्य प्रभुमवनिसुतावल्लभं तस्य वाक्यं नीत्वायोध्यां गमिष्यस्यखिलकुशलतामानयिष्यस्यपीति चंडोड्डीनं चकार
द्रुतमथ जननी लक्ष्मणस्योपलभ्य स्वप्ने व्यालः समूलं कवलयति भुजं वाममुत्तस्थुषीति २१ प्रोवाच कोसलसुता पुरतो द्रुतं सा स्वप्नं
च सा मुनि वसिष्ठपुरोहितस्य पार्श्वे नियोज्य सशरं धनुरादधानं शांतिं चकार भरतं मुनिराज्यहोमैः २२ तत्र द्रोणाद्रिशिखरे हनू
मन् दृष्ट्वा सर्वास्तुहिनकिरणोद्यत्प्रभास्तत्र शैले वल्लीरत्नान्यमलखदिरांगारभास्वंति वीरः ध्यात्वा दोर्भ्यां गिरिमुदहरन्नुत्सपातै
षतातं सस्माराशयं द्रुतमुपगतस्तद्बलेनोज्जहार २३

वल्लीः तुहिनकिरणश्चंद्रस्तद्वत् उद्यंती भा यासां ताः एतेन सर्वासां साम्यमुक्तम् किंभूतानि र
त्नानि अमलेत्यादि तदज्ञाने ध्यात्वा तदन्वेषणाय श्रमित्वा दोर्भ्यां गिरिमेवोदहरत् यदा एषः गिरिः नोत्सपात नोन्मूलितवान् तदा स हनूमान् तातं वायुं सस्मार
अयं वायुः द्रुतमुपगतः तदा तद्बलेन सह तं गिरिं हनूमानुज्जहारेत्यर्थः २३ ७ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

हुत्वेति श्रीखंडं कांडं चंदनखंडं नारिकेरमेव पूर्णाहुतिं जुहाव हुतवान् तत्र पूर्णाहुत्यवसरे आंजनेयः प्राप्तः सः भरतः तं हनूमंतं इति शरेण ताडयामास इति किं
अयं सः किं इति वाक्यस्यायमर्थः येन कालरूपेण सुमित्रायाः मातुर्वामो भुजः समूलः कवलीकृतः सोयं किं अथवा यज्ञहंतारं घंटासुरं प्रलयकालानलप्रख्यं भग
वान् मुनिर्वसिष्ठो व्याचष्टे सोयं किमिति भ्रांत्या भरतस्तं हनूमंतं शरेणाजघान २४ अयं चिरजीवीति विधिलिखिताक्षरपंक्तिः पुंखेति पुंखावशेषः यो भर

तत्रायोध्यायां शांतिमंडपे कुंडसमीपस्थौ भरतवसिष्ठौ हुत्वा श्रीखंडकांडं सतगरकुसुमं पुंडरीकं मृणालं कर्पूरोशीरगर्भं प्रचुरघृतयु
तं नारिकेलं जुहाव तूर्णं पूर्णाहुतिं सज्वलदनलनिभं शैलमादाय वीरः प्राप्तस्तत्रांजनेयः स किमिति भरतस्तं शरेणाजघान २४ त
दा भरतबाणेन भिन्नो हनूमान् भरतदोर्दंडमुक्तकांडप्रचंडप्रहारमूर्छितो विधिलिखिताक्षरपंक्तिलोपात्प्राणान्परित्यक्तुमिच्छन्
पुंखावशेषभरतेषुललाटपट्टो हा राम लक्ष्मण कुतो हमिति ब्रुवाणः संमूर्छितो भुवि पपात गिरिं दधानो लांगूलशेखररूढेण सकेसरे
ण २५ तत्र वसिष्ठभरतादयः सर्वे सविस्मयं सर्वे निशम्य सह लक्ष्मणराम नाम तत्रोपगम्य हनुमतः सदयो निपेतुः वृत्तं च तस्य वचना
दपनीय शल्यं मूर्छां जहार समुनिर्गिरिजौषधीभिः २६ तेषुर्बाणः तद्युक्तो ललाटपट्टो यस्य सः हनूमान् केसरेण गिरिं दधानः भुवि पपात किंभूतेन
केसरेण लांगूलस्य शेखरो ग्रभागस्तत्र भवेन २५ सर्वे इति लक्ष्मणेन सहितं सलक्ष्मणं चेदं राम नाम निशम्य तस्य हनूमतो वचनात् वृत्तं सीताहरणसेतुबंधनल



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्ष्मणशक्तिपातेदाद्रौषधिप्रयाणरूपमुपगम्य ज्ञात्वा शल्यंललाटस्थबाणमपनीयोद्धृत्यमुनिर्वसिष्ठोमूर्छांहनूमतोजहार २६ जिज्ञासेति गोपायतीहभर
तोस्तुममानुजः किमिति रामेणस्तुतस्यहनूमान्भरतमितिजगाद इतिकिं हेभरत अहंश्रांतोस्मि त्वंगिरिंनयप्रापय ननुगिरिप्रापणमेवकिमुक्तंनान्यच्छौर्यं

हनूमान्साभ्यसूयम् जिज्ञासयाभरतबाहुपराक्रमस्यरामस्तुतस्ययुधिलक्ष्मणशक्तिभेदे श्रांतोहमित्यथगिरिंनयत्वंकुमारंवा
क्यंजगाद हनुमान्भरतंसरोषः २७ रामलक्ष्मणयोः समरसंकटमुपलभ्य गगनमंडलभ्रांतनिजभुजाटोपनायदोधूयमानधनुर्गुण
टणत्कारमभिनीय अत्रांतरेरामः वत्सोत्तिष्ठधनुर्गृहाणरिपवः सैन्यंनिनिर्भ्रंतिनः किंशेषेद्यनिराकृताः किमरयः मत्यात्त्वताप्रिया
भ्रातर्देहिवचोबिभेतित्वदयंभ्रातःप्रियंछिंधिमाकेकेयीप्रियसाहसेसुतवधान्मानः कृतार्थाभव २८ श्रुत्वेतितस्यवचनंभरतः श
राग्रेसाद्रिंकपिंसमधिरोप्यगुणेनियोज्य मोक्तुंदधेझटितिकुंडलिनंचकारतुष्टावतंपरमविस्मयमागतः सः २९ हनूमान् उत्तीर्यबा
णात्कुशलंगृहीत्वासंपूज्यबाहुंभरतस्यवाग्भिः मनोदरिद्रस्ययथादिगंतंतथाहनूमान्शिबिरंजगाम ३० तत्राह कुमारंसुकुमारंइतिभारवा

हकलायोगात् २७ २८ श्रुत्वेति शराग्रेसाद्रिंकपिंसमधिरोप्यतंशरंगुणेनियोज्यमोक्तुंत्यक्तुं झटितिशीघ्रंधनुः कुंडलिनंकुंडलपर्यंताकृष्टंचकारेत्यर्थः
यदाधनुःकुंडलीकृतंतदापरमविस्मयमागतः सहनूमान् भरतंतुष्टाव साधुसाध्विति शशंस २९ ३० ६ ६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तरसारामकटकंजगामेतिभावः दिगिति दिग्भागे पूर्वदिक्प्रदेशे उत्तालादृष्टिर्यस्य सूर्योदयभ्रमवशात् एतेनजविलंघोतितं ३१ सिंहावलोकनन्यायेनास्यागमनमादि
तआह हत्वेति द्रोणाद्रिसमीपे मायामुनीन्राक्षसान् नाम्नाकंधकालींरजनिचरवरांग्राहीरूपांसरसिमकरीरूपधारिणींप्रबलंयथास्यात्तथारावणप्रहितान् राक्षसान् स



अद्रिंरुद्रावतारः प्रलयसमुदितद्वादशार्कानुकारंद्रोणंदोष्णादधानः कटकनिकटतामागतोप्यर्धरात्रे दिग्भागोत्तालदृष्टिस्तरलतरसरस्ती
रमास्थायवीरस्तारंधीमानरोदीत्तदनुसहमुदावाहिनीमाजगाम ३१ पर्वतोद्योतनेनसूर्योदयभ्रमात्सरोवरस्थंविकसितकमलमालोक्यप्रा
तराशंकयालज्जावानरोदीत् तदनुदिग्भागानवलोक्यसूर्योदयमपश्यन्मुदंप्राप्यहाज्ञातंपर्वतोद्योतनेनसूर्योदयभ्रमात्कमलविकास
इतिहर्षेणसहस्ववाहिनींजगाम हत्वामायामहर्षीन्रजनिचरवरंकंधकालीमुदग्रांग्राहीरूपांप्रमथ्यप्रबलमथबलंराक्षसान्मर्दयित्वा
जित्वागंधर्वकोटिंझटितिततमणिज्वालमादायशैलंप्राप्तः श्रीमान्हनूमान्पुनरपितरसानंदितस्तत्पुरस्तात् ३२ रामसुग्रीवादयः सर्वेसहर्षे
योमैंदद्विविदादिवानरचमूचक्रस्यरक्षाकरः संहर्तारणसंगभैरवरवोल्लासस्यलंकापतेः सीतातंकमहांधकारहरणप्रद्योतनोयंहरिः संप्रा
प्तः पवनात्मजः पटुमहः श्रीकंठवैकुंठयोः ३३ मुद्रोपकंठंमर्दयित्वा पुनरिंद्रेणतद्बलजिज्ञासयाप्रहितांगंधर्वाणांकोटिंझटितिजित्वातत्पुरस्ताद्रामाग्रेतरसाशी-
प्रंबलेनवा ३२ यइति रावणस्यरणसंगेयोभैरवः परत्रासनशब्दस्तेनयउल्लासआनंदस्तस्यसंहर्ता श्रीकंठोरुद्रः वैकुंठोरामस्तयोः पटुरधिकोमहः आनंदोयस्मात् तदंशतद्भ
क्तत्वात् महउद्भवउत्सवइत्यमरः सुगमम् ३३



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

कपीति अथवानराः लक्ष्मणमंगलमाशंसंतः गंडगोपालनामा हनूमान् लक्ष्मणस्यविशदलक्ष्मीं मूर्च्छाहरणरूपांदिशतु औषध्यानयनेन प्रयच्छतु गंडात्कपोलमध्या
त्गोपंसूर्यंलातिगृह्णातीतिगंडगोपालः गावः किरणान्पातीतिगोपः यद्वा गावः जलानि पिबतीति सहस्रगुणमुत्स्रष्टुमादत्ते हिरसंरविरित्युक्तत्वात् अत्रेयंकथा
बालेन हनूमताफलभ्रमादज्ञायरविमंडलंग्रस्तंपुनर्ब्रह्मणे प्रत्यर्पितम् उक्तमपि भैरवसहस्रनामस्तोत्रेमहेशोगंडगोपालो रवड्गांगीगीतनायक इत्यादि सकः य-
आत्मनोरामस्यश्रीमच्चरणनमस्कारेणनित्यसत्योदयश्रीः प्रकाशकः सत्यप्रतिज्ञ इति कपिकटकभटानांमध्येयः समरशिरसिधीरः यद्वा यमर्थः गंडगोपालना

कपिकटकभटानांगंडगोपालनामासमरशिरसिधीरोयोंजनायास्तनूजः दिशतुविशदलक्ष्मींलक्ष्मणस्यात्मनः श्रीचरणनलिननत्या
नित्यसत्योदयश्रीः ३४ एकैकस्योपकारस्यप्राणान्दास्यामितेकपे प्रत्यक्षंक्रियमाणस्यशेषस्यऋणिनोवयम् ३५ रामः सदयं अंगेष्वेव
जरांयातुयत्त्वयोपकृतंकपे भवान्प्रत्युपकारार्थमापत्सुलभतांपदं ३६

माकपिकटकभटानांविशदलक्ष्मींदिशतु सत्पुत्रेणैकेनतज्जातीयाश्लाघ्यंतइ
तिध्वनिः लक्ष्मणस्यात्मनोभ्रातुः रामस्यचरणादिकं पूर्ववत् ३४ एकैकस्येति हेकपे हेहनूमन् प्रत्यक्षंक्रियमाणस्यलक्ष्मणविशल्यकरणस्योपकारस्यतेतुभ्यंप्रा
णान् दास्यामि तेत्वयाक्रियमाणस्यवादत्तेषु प्राणेषुपुनस्तदभावात् शेषस्यैकस्यैवसमुद्रलंघनादिरूपस्योपकारस्यवयंऋणिनएवऋत्यकइतिसंध्यभावः ३५
अंगेष्विति मदंगेष्वेवउपकारहेतुरापदस्त्विनवमास्त्वित्याशीः उपकारः ३६ ५ ५ ५ ५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आलेपितइति धरणीधरः शेषस्तदवतारः अन्यत्सुगमम् ३७ ईषदिति ईषदल्पार्थेवेदनांवेदनांचस्फुटयति वेदनादुःखंराघवेंद्रस्यतव वयंकेवलंव्रणिनः



लक्ष्मणः आलेपितोहनुमतागिरिजौषधीभिमूर्च्छांविहायसशरंधनुराददानः रामारविंदनरणिर्धरणीधरात्मालंकापतेः कुपितका
लइवोपतस्थौ ३७ क्रोधारुणः प्रोत्फुल्लखदिरांगारनेत्रोधनुर्गुणटणत्कारमभिनीय रामः सहर्षंसबाष्पंसपुलकंचलक्ष्मणंगाढमालिंग्य
हावत्सलक्ष्मणप्रोदशक्तिभेदखेदंजहिममत्हृदयपर्यंकेहामेघनादकुलकमलिनीप्रालेयवर्षवत्सएतावतींवेदनांनवेत्सि लक्ष्मणः आर्य
ईषन्मात्रमहंवेद्मिस्फुटंयोवेत्तिराघवः वेदनाराघवेंद्रस्यकेवलंव्रणिनोवयं ३८ इतिश्रीहनुमन्नाटकेलक्ष्मणशक्तिभेदोनामत्रयोदशोंऽ
कः १३ ततः प्रातःकालेरावणोलोहिताक्षंदूतमाहूयसमादिशति रेलोहिताक्षवानरवाहिनींगत्वाराममितिब्रूहि अयेरामजामदग्न्यंनि
र्जित्ययस्त्वयाहरप्रसादपरशुर्गृहीतस्तंरावणायप्रयच्छ ततस्तवसीतांप्रयच्छामि लोहिताक्षः यदाज्ञापयतिदेवइति गगनमुत्पत्यराम
शिबिरेअवतरति ततोरामंनमस्कृत्योपस्थितः रामस्तंरावणदूतंज्ञात्वापृच्छति अयेलोहिताक्षकिंकरोतिराक्षसगणः लोहिताक्षः देव
अधाक्षीन्नोलंकामयमयमुदन्वंतमतरद्विशल्यांसौमित्रेरथमुपनिनायौषधिवराम् इतिवयमित्यानंदादुन्मादः ३८ इतिश्रीहनुमन्नाटकेमि



श्रमोहनविरचितायांदीपिकायांलक्ष्मणशक्तिभेदोनामत्रयोदशोंऽकः समाप्तः १३ अधाक्षीदिति अधाक्षीत् अदीदहत् विशल्यांशल्यनिवर्त्तकाम् स्मारंस्मारं

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्मृत्वास्मृत्वा भयहेतोर्हृद्वान्ये सुबोधम् १ पौलस्त्येति हेदूत सरावणः ममगिरामदीयवचनेनैवत्वयाइतिवाच्यः इतिकिं हेपौलस्त्य तावकमतिंत्वदीयांबुद्धिंस्मृत्वा
विचार्यमनोमोदते परंतुप्रणयेनप्रीत्याहरप्रसादपरशुर्नदेयः तेनदत्तेनपरशुनामरावणोधिकंयस्यात्तथाताम्यतिग्लानिमियति यद्वा एकंपदंपौलस्त्येनास्मासुप्रण

इतिस्मारंस्मारंत्वदरिनगरीभित्तिलिखितं हनूमंतंदंतैर्दंशतिकुपितोराक्षसगणः १ रामः विहस्य किमर्थमागतोसि लोहिताक्षः
देवभृगुपतिंनिर्जित्य गृहीतंहरप्रसादपरशुं रावणाय प्रयच्छ ततस्त्वसीतां समर्पयिष्यतिलंकेश्वरः रामःविहस्य दूतपश्य पौल
स्त्यप्रणयेन तावकमतिंस्मृत्वामनोमोदतेदेयोनैषहरप्रसादपरशुस्तेनाधिकंताम्यति यद्वान्यःसदशाननो ममगिरादत्ताद्विजेभ्योम
हीतुभ्यंब्रूहिरसातलंबलभिदंनिर्जित्यकिंदीयतां २ अथरामाय देवराजः शत्रुंजयंरथवरंवितरतिस्म रामोपिहनूमंतंरथध्व
जाग्रमारोप्यस्वयंरथारोहणंनाटयति तथाविधंतमालोक्यलोहिताक्षोनिष्क्रांतः लंकाशिखरस्थोरावणः अयेलोहिताक्षकोसौ
दाशरथेर्ध्वजेवर्तते लोहिताक्षः देव हेलोल्लंघितवारिधिर्जनकजाविश्लेषशुष्यन्मनः कौसल्यासुतदैन्यपारनपटुर्ग्रस्तांशुभूमंडलः नि
र्दग्धाखिलराक्षसेंद्रनगरः सौमित्रिसंजीवनायोत्खातौषधिपर्वतश्चमरुतः पुत्रोध्वजेवर्तते २ यः कृतस्तेन तावकमतिंत्वदीयांबुद्धिंरावण
स्त्वमपिमूर्खइतिभावः अन्यद्देहीतिचेत्तत्राह महीद्विजेभ्योदत्तातुभ्यंरसातलंदत्तंब्रूहि त्वमेवकथय भवंतंनिर्जित्यबलभिदेकथंदीयतामिति अयमर्थः पूर्वंतु

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

परशुरदेयः रावणायचेद्दीयतेनर्हितस्यातिकोपः स्यात् तथापिदीयतेपरंलेषइंद्रायरक्षितः पृथ्वीरसातलाभावेनस्यदेयत्वाभावात् २ हेलोल्लंघितेति जनकजाविश्ले
षशुष्यन्मनोयस्यसचासौकौसल्यासुतश्चेति तस्यदैन्यपाटनेदूरीकरणेपटुर्विदग्धः सुबोधम् ३ रामायेति हेनीतिज्ञे कार्याकार्यविदग्धे प्रतिपक्षाः शत्रवएवरक्षास्तेषांदा
हार्थेशिखिनेग्निरूपायकतमंसीतादानंस्वर्गप्रापणंवा पदंस्वकीयबुद्धिस्थानंसुश्राव्यंस्वकीयः सिद्धांतः सुश्राव्यइति पदंनिर्णयलोकयोरितिहैमी बलंसैन्यमगमत्

रावणः सत्वरंमंदोदरीमंदिरंप्रविश्य अयिमंदोदरि रामायप्रतिपक्षरक्षशिखिनेदास्यामिवामैथिलींयुद्धेराघवसायकैर्विनिर्ह
तः स्वर्गंगमिष्यामिवा नीतिज्ञेकथयस्वदेविकतमः पक्षोगृहीतस्त्वयासुश्राव्यंपदमस्मदीय——————मगमन्मन्मात्रशेषंबलम् ४
मंदोदरीविहस्य अयिप्राणनाथलंकेश्वर दृष्वादैन्यंभगिन्याः श्रुतखरनिधनंमातुलस्यापिनाशंतालानांभेदनंयत्कपिवरदह
नंबद्धसुग्रीवसख्यम् कर्माण्युद्यानभंगेजलनिधितरणंयोनजातस्तदानींसोयंनष्टेकुलेस्मिन्कथमिवगमितोजायतेतेविवेकः ५

व्यतीतम् किंभूतंबलम् मन्मात्रशेषम् अहमेवउर्वरितइतिभावः ४ अयीति खरेत्युपलक्षणम् अर्थात् खरत्रिशिरोदूषणानांसुतोक्षः योविवेकः स्वर्गयामिसी
तांददामीतिवातदानींभगिन्यादिहननश्रवणेनजातोयोविवेकः गमितोनष्टोपिकथमिवजायते कथंजातइतिलोकोक्तिः ५ ६ ६ ६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

धिगिति स्वर्गग्रामठिका स्वर्ग एव ग्रामस्तत्र विलुंठनं रत्नसंचयस्तस्य लुंठनं प्रसह्याहरणं तत्र परैस्तस्करैः विलुंठं रत्नसंचय इति निविश्वः येन रावणाय अयं धिक्कारः
यतः पूर्वं तु अरण्य एव तत्राप्यरिषु तापसोयं सोपि तापसमात्रोपि अत्रैव मत्समीप एव तत्रापि राक्षसभटान् कुंभकर्णमेघनादादीन् जीवति अयमेव धिक्कारः ६ ६१
शोकमिति गाढोपगूढं गाढालिंगनं हे कांते मयि करुणां दैन्यं मा तरुणय मा दीपय यः एकः निरतिशयवीरो हं प्राणरंकः प्राणलुब्धः किं नेत्याह राक्षसेंद्र इत्युत्का इ

रावणः सापत्रपं साभ्यसूयम् धिक् धिक् शक्रजितं प्रबोधितवता किं कुंभकर्णेन वा स्वर्गग्राममठिकाविलुंठनपरैः पीनैः किमेभिर्भुजैः
धिक्कारोत्ययमेव मे यदरयस्तत्राप्यसौ तापसः सोप्यत्रैव निहंति राक्षसभटाञ्जीवत्यहो रावणः ६ मंदोदरी सकरुणं शोकं लंकेश मा
गाः कुरु चिरमपुनर्भावि गाढोपगूढं देवाज्ञां देहि योद्धुं समरभवनरामस्य स्मि सुक्षत्रियायत् रावणः विदीर्यमाणहृदयः मैवं कांते स्व
कांते तरुणय करुणां प्राणरंकः किमेकं लंकां संत्यज्य शंकां शिव शिव समराय उद्यतो राक्षसेंद्रः ७ अथ रामाज्ञया वानरभटाः उद्यद्दि
क्पालकोलाहलबहलमदा वग्रहोग्राभिरक्ष्णां ताराभिर्दीप्यमानं दिशि विदिशि दशग्रीवमुद्वीक्षयंतः एते निःशेषसेतुग्रथनसमधिकैः श
स्विणः शैलपादैरुद्दामानः कपींद्रा रजनिचरपुरीमुत्तरेण प्लवंते ८ निःशेषः लंकां संत्यज्य भयमपि संत्यज्य समराय उद्यतो भूत् यद्वा शंकास्यामस्तीति निशं

कांतां शंकावतीं लंकामिति वा ७ उद्यदिति ते कपींद्राः उत्तरेण उत्तरमार्गेण प्लवंते निरुंधंति उत्प्लुत्यारोहंति वा उद्दामानः उच्छृंखलाः अक्ष्णां ताराभिरुद्दीप्यमानं दश

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ग्रीवं किंभूताभिः रावणभंगदर्शनाद्योद्यंतो येदिक्पालास्तेषांकोलाहलाज्जातोयोबहलःमदः बहुतरगंधस्तस्यावग्रहोनिरोधस्तैर्नोग्राभिः देवदर्शनादेवादैन्यसंदे
शिनीभिरित्यर्थः एतेवानराः शस्त्रिणः शस्त्रवंतः ८ ९ अस्त्रमिति भूमीरुहाः वृक्षाः सीदंति भस्मीभवंति तद्धेतुमाह किंभूताभूमीरुहाः पौलस्त्यो रावणस्त
स्यवक्षस्तटे संघट्टोमेलनंतज्जातोयोनलस्तेनदत्तादावविपत् दावाग्निदुःखंयेषांते रावणेनापिस्वशैलस्त्रिकूटशिखरः उत्पाट्यदशग्रीवाय प्रहितः अयंशिखरः नि

जलमध्येरुद्रपादाद्रिशिखरगतोरामरावणयोर्युद्धंनिरीक्ष्यमाणोरुद्रः कपिभटैः संवेष्टितांलंकांविलोक्य मरुद्रुद्रादित्योशनमुख
मुखास्तेक्रतुभुजः पुरद्वारेयस्याः सभयमुपसर्पत्यनुदिनम् प्रकोपध्याधैर्याधरतटपुटैर्वानरभटैः समाक्रांतासेयंशिवाशिवदशग्रीवनग
री ९ सुग्रीवेण अस्त्रंयत्प्लवगाधिपेनविहितंपौलस्त्यवक्षस्तटे संघट्टानलदत्तदावविपदः सीदंतिभूमीरुहाः रावणेन उत्पाट्यप्रहि
ताः स्वशैलशिखरेलंकेंद्रहस्तावलीपिष्टोयंनिजकुंडनिर्झरजलैर्जंबालपिंडायते १० तथैनेनोद्धृत्यस्फटिकशिखरीसोपिविद्धंस
मंतादामूलात्त्रुटितवसुधाबंधविधुतः अमुंयेनाद्यापित्रिपुरहरनृत्यव्यतिकरः पुरस्तादन्येषामपिशिखरिणामुल्लसयति ११

जआत्मीयोयःकुंडस्तदस्ततोयेनिर्झराः प्रस्रवणास्तेषांजलैर्हेतुभिः जंबालपिंडः शैवालपिंडवत्दृश्यते कुंडस्तटेन्हदेकुंडमितिधरणिः पिंडत्वंद्योतयतिलंके
शहस्तपंक्त्यापिष्टः पिंडीकृतः पुनःपुनः कंदुकवत् उत्पतनेनातिरिक्तभंगात् पिंडीभूतः स्रवज्जलः शिखरोजंबालपिंडवत्दृश्यतइतिभावः १० उत्पाटनेप्रयोज





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नमाह तथेति यथात्रिकूटशिखरः उत्पाटितः तथानेन रावणेन स्फाटिकगिरिरुद्धृत्योत्पाट्य समंतादामूलं अभिव्याप्यन्नुटितो योवसुधाबंधस्तेन विधूतः विशेषेण
कंपितः विदधे कृतः सोपि स्फाटिकशिखर्यपि अद्यापि येन उत्पाटनेनान्येषामपि शिखरिणां पुरस्तादग्रे अमुं रावणं पुरहरः रुद्रस्तदर्थं योनृत्यव्यतिकरः नृत्ये सतिव्य
तिकरः कोपातिशयस्तमुल्लसयति शिक्षयति स्मारयतीत्यर्थः कोर्थः यथानदुत्पाटने रुद्रस्तुष्टः तथैतेषामपि उत्पाटनेन दधिलाभवंतं रक्षिष्यतीति भावः ११
भेरीति दशकंधरः विधेः कर्मणा आज्ञया प्राक्तनकर्मप्रेरणयेतियावत् यद्वा विधेर्ब्रह्मणः शक्तिदानादिषु ब्रह्मसंबंधस्य सत्वात् नगर्याः सकाशाद्युद्धार्थं नि

रावणः सक्रोधं रथारोहणं नाटयति भेरीमर्दलशंखतालनिकरस्वानोल्लसत्काहलोनिः सानस्वनपूर्णकर्णकुहरो निर्यन्नगर्या बभौ यु
द्धार्थं दशकंधरो रथगतो माणिक्यमौलिर्यशोदीपादीपितमस्तको जनकजारामो विधेः कर्मणा १२ नीचैर्ववौ परिमितः पवनो वनेषु मंदी
चकार तरणिः खरतां करेषु रक्षःपतिर्गगनमाप्तमवेक्ष्य साक्षान्नद्यो ययुः स्थगिततुंगतरंगभंगाः १३ र्यन्गच्छन् सन् बभावित्यन्वयः य

शो विजय एव दीपस्तेनादीपितः प्रकाशितः मस्तकः ब्रह्मलोको येन तत्पर्यंतविजयीति भावः तद्गमनेपि तत्र प्रतापगमनसत्वात् ब्रह्मा वा सशिरो विष्णुः भंजिका
स्वपि मस्तक इति शाश्वतः जनकजामारः जनकजायाः मारः कामो यस्य वागर्थे जनकजायाः सकाशादाराम अक्रीडो यस्य मृत्युरिति अन्यत्सुबोधं १२ नीचैरिति
खरतां तीक्ष्णत्वं गगनं आकाशं प्रति आप्तं प्राप्तमवेक्ष्य दृष्ट्वा यद्वा एकमेव पदं गे आकाशे येगाः देवगणास्तेषां नमः प्रवलं प्राप्तं येन गगने यत्रावलोकयति तत्रै

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वदेवानमंतीतिभावः गकारोगगनेद्वीपेगणेशोगोगणेपिचेतिशाश्वतः णमूः प्रह्वीभावेइत्यस्याप्रत्ययेनमः १३ यदेति रावणस्यप्रत्यासन्नत्वादानंदेदेवा
नामुन्मादावसरे नीलोवानरःलंकाधिपश्चासौसुभटस्तस्यकोदंडाग्रभागेस्थितोभूदितिशेषः किंभूतः चंचंतोयेबाष्पाः क्रोधाश्रूणिगिरिप्रस्रवणवारीणितेराक
लिताकरंबितामृगतृष्णातदन्वितोगिरिर्यस्मिन्सः हस्तेधृतगिरिर्नीलः रावणधनुरग्रेस्थितइतितात्पर्यार्थः तदादिङ्मंडलजुषांस्वस्वदिगाकाशस्थितानांदेवानां
मतिरेवंजनिता एवंकिं रावणहस्तधनुःशिखरेभृंगस्थानीयोनीलः श्यामत्वात् नीलहस्तेगिरिस्तत्रगिरौजलस्थानीयातृष्णागिरिप्रस्रवणा अयमेवोन्मादः १४

आकाशे यदानीलोलंकाधिपसुभटकोदंडशिखरेस्थितश्चंचद्बाष्पाकलितमृगतृष्णान्वितगिरिः तदैवंदेवानांमतिरजनिदिङ्मं
डलजुषांधनुःशृंगेभृंगस्तदुपरिगिरिस्तत्रजलधिः १४ रावणस्य साश्चर्यंतत्ररामेसपटुभटमुखेसव्यथंदैवतौर्यसाशंकंरामयुद्धे
कपिषुसविनयंलक्ष्मणेसाश्रुपूरम् सासूयंभ्रातृकृत्येसभयमनिलजेसत्रपंचात्महृत्यंक्षिप्रंनद्वक्त्रचक्रंरजनिचरपतेर्भिन्नभावं
बभूव १५ आश्चर्यमिति रजनिचरपतेः रावणस्यवक्त्रंचक्रंमुखसमूहः भिन्नभावंचित्ररसाश्रयंबभूव भिन्नत्वमेवविवृणोति रामेसाश्चर्यंसविस्मयंसाद्भुत
रसमितिसपटुसोत्साहं सवीररसमिति उत्साहात्माभवेद्वीरः सव्यथंसविषादंसशांतरसमितिविषादः संचारिकोवा मयासीताऽनीतायतोदेवाअपिवलांते अद्या
पिसंधिकरोमीतिविषादः तदुक्तंरसोदधौ विपदिष्टाद्यनवाप्तेः प्रारब्धासिद्धितोपराधाच्च अनुतापोत्रविषादोविज्ञेयोमुक्तिसंबंधः साशंकंसविप्रलंभंशृंगारंशंका



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्यसंचारी रामः सीतांमागृह्णात्विति शंका उक्तंचरसोदधौ स्त्रीयापराधचौर्यकृतपरचौर्यादितोमताशंका स्वानिष्टेक्षणयोगस्तद्भयभावोत्रविश्लेषः अत्रस्वानिष्टे-
क्षणंसविनयंसदैन्यंसकरुणमितिदैन्यंसंचारी हनूमदादिदर्शनोद्दीपितात्सपुत्रवधाद्दैन्यम् सास्त्रुपूरंरसाद्रौद्ररसात्क्रोधस्थायीक्रोधानुभवमश्रुतत्रैवलक्ष्मणदर्शनेस
ति मेघनादेवत्सलरसोजातः एतेनपुत्रोहतइतिउद्दीपनंवात्सल्यात् अश्रूणि अत्ररसद्वयंवक्तृद्वयेज्ञेयं सासूयं सहास्यरसंहास्येसूयासंचारी साचबिभीषणगता -
असूयातोपिहिहास्यंभवतिइतिप्रसिद्धं सभयंभयानकरसः भयंस्थायी सत्रपंसबीभत्संत्रपात्रानुभावः साचयाजुगुप्सातोभवति जुगुप्सात्रस्थायी एवमद्भुतवीर

बध्वातूणान्दशोच्चैर्मघवहयसटावेणिबंधेनवामैर्दोर्भिश्चापान्विधुन्वन्दशदशचशरान्दक्षिणैराददानः क्ष्वेडन्क्रीडन्प्रकुप्यन्प्रसर
द्भिभवद्गर्जितातर्जितौघैः शम्वत्विवद्यन्मुखश्रीरवतरतिरणप्रांगणेराक्षसेंद्रः १६ रामरावणयोः रणांगणेकुंडलिनोयुवानः प
रस्परंसायकभिन्नदेहाः कुचाग्रलग्नाइवकामिनीनांकुंभाग्रलग्नाःसुषुपुर्गजानाम् १७ गगनंगगनाकारंसागरःसागरोपमः राम
रावणयोर्युद्धंरामरावणयोरिव १८ शांतशृंगारकरुणरौद्रवत्सलहास्यभयानकबीभत्साः यथाक्रमंज्ञेयाः १५ बध्वेति इंद्राश्वकेशश्रेण्यांउच्चैर्गादंदशतूणान्नि
षंगान् बध्वावामैर्दशभिर्दोर्भिर्दशचापान्विधुन्वन्सन् दक्षिणैर्दशभिर्दोर्भिः दशशरानाददानः दशमुखेषुपृथक्पृथग्भावंद्योतयति अत्ररसाः ग्रंथगौरवात्नोद्धाल्पंतेकीर
क्रूराक्षसेंद्रः क्ष्वेडन्हसन् क्ष्वेडामर्षगतंहास्यमितिधरणिः द्वंद्वः तच्चमुखंतेषांश्रीयस्यतच्चाधिकंदशधोक्तम् १६ रणेति कुचस्थानीयाः कुंभाः १७ १८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अश्वेति यावत्क्रव्यादवीरः मारः खंडितस्य मध्यतः कृतस्य वाजिनोऽश्वस्य पूर्वार्धमध्यारूढः अरिकुलबलात् शत्रुसैन्यात्सकाशात् शिबिरं स्वकटकं पादयुग्मेन खंडिताश्वा
र्द्धप्रदेशे कृतस्तच्चरणयुगुलेन नव्रजति न गच्छति धावंतं अर्द्धं तावत् क्रुद्धेनांगदेन द्राक् शीघ्रं समरे पश्चिमार्द्धेन कृत्वा पश्चिमभागेन कृत्वा शिरसि आताडितः किंभूते
न पश्चिमार्द्धेनांगदकरतलोत्थापितेन शिवशिवकष्टम् १९ महच्छरीराणि रक्षांसि स्वल्पशरीरान्वानरान् वलोऽस्यजयेविचिकित्समानं रामं बोधयति यावानिति हे राम अब्धि
र्यावान्मानतोऽगाधतायाश्च तावता तत्सदृशमानेन फलशं शिशुना किं पीतः किंतु महानब्धिरल्पतरोगस्त्यइति च पुनः हरिरिंद्रः तुल्याकारान् स्वल्पप्रमाणान् खगान् गि

तत्र सारो नाम राक्षसस्तुमुलयुद्धे अश्वारूढस्तु यावद्व्रजति न शिबिरं वाजिनः पूर्वमर्धं धावंतं खंडितस्य स्वमरिकुलबलात्सादयुग्मेन धी
रः मारः क्रव्यादवीरः शिरसि करतलोत्थापितेनांगदेन क्रुद्धेनाताडितो द्राक् शिवशिव समरे पश्चिमार्द्धेन तावत् १९ अंगदः यावानब्धिः क
लशशिशुना तावता किं च पीतस्तुल्याकारान्प्रहरति हरिः किं खगानद्रितुंगान् तत्रागम्याः प्रथितवपुषः संतु तिग्मस्वभावास्तेषां ग्रासग्रहण
रभसं रामते नामधेयम् २०

रीन्प्रहरति अपि तु स्वयमल्पः अद्रयस्तुंगाः पक्षिपर्वतयोः खग इति हेमी तेषां सपक्षत्वात् किंभूतान् खगान् अद्रितुंगान् सूर्यपर्यंतोन्न
तान् अद्रयो द्रुमशैलार्का इत्यमरः तत्र तस्मिन्प्रस्तावे अगम्या गंतुमशक्याः समुद्रादयः प्रथितवपुषः गिर्यादयः तिग्मस्वभावाः स्वभावतेजस्विनः अगस्त्येंद्रादयोऽपि संतु
भवंतु तेषां सर्वेषां ग्रासग्रहणे कवलग्रहणादौ सरभसं सत्वरं रामते नामधेयमस्ती निशेषः रामोऽयमिति शब्देनैव तेनेनष्टाः भविष्यंति किमत्राल्पदीर्घविचारणयेति भावः



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यावताभवतातु बद्धएव इंद्रोपिगि
कतिचित्पुस्तकेषु रावणवाक्यमिदं तत्सर्श्यामुनीतिपाठः तत्रायमर्थः यावानब्धिस्तावानगस्त्येनपीतः तावतासर्वपानेनकिंकानोहानिः
शीन्प्रहरतितेनगिरिप्रहरणेनकिंकानोक्षतिर्भर्तपुत्रेणबद्धएवतथात्वयापिगिरिसमाः शौर्यादिहीनाः केचनराक्षसाः हताः तत्तस्मात्प्रथितंवपुर्येषांते तिग्मस्वभावाः स्व-
भावतीक्ष्णाः मादृशाः राक्षसाः संतुतिष्ठंतु अमूनल्पतरान् राक्षसान्पश्यसि हेरामतेषांतिग्मस्वभावानांतेनामधेयंतत्तन्नाम्नाख्यातंसैन्यंचग्रासग्रहणाय रभसंशून्यं
नंकिमपीत्यर्थः रभसः पदशून्ययोरितिचरकः २० स्त्रीमात्रमिति विकत्थसेविकत्थनांकरोषि अतोवदत्वयावीरः कोजितः अन्यत्सुबोधम् २१ वंद्याइति हुमिति

रावणः स्त्रीमात्रंननुताटकामुनिसुतोरामः सविप्रः शुचिर्मारीचोमृगएवभीतिभवनंवालीपुनर्वानरः भोकाकुत्स्थविकत्थसेवदरणे
वीरस्त्वयाकोजितोदोर्गर्वस्तुतथापितेयदिपुनः कोदंडमारोपय २१ अत्रांतरेंगदः वंद्यास्तेनविचारणीयचरितास्तिष्ठंतुहुंवर्ततांसुंद
स्त्रीदमनेप्यकुंठयशसोलोकेमहांतोहिते यानित्रीणिकुतोमुखान्यपिपराण्यासन्खरायोधनेयद्वाकोशलमिंद्रसूनुनिधनेतत्राप्यभिज्ञोजनः
२२

कोपेव्ययं हेरावण एतेरामादयोवंद्याः नमस्तुतियोग्याएवकीदृशाः वर्ततांव्यवहर्तृणांमध्येविचारणीयचरितान् अतएवलोकेमहांतस्तेप्रसिद्धाः अविचारणीयत्वमेवा
ह सुंदस्त्रीताटकातद्दमनेपिअखंडंयशोयेषांते स्त्रीवधादपकीर्तिर्बाहुल्यनियमात् अतस्तेतिष्ठंतुतद्वार्तयाकिंकृत्यंचेद्वीर्यमेवश्रोतुकामोसितर्हिश्रृणुयानिप्रसिद्धानि
त्रीणिमुखानित्रिशिरःशिरांसिचकुतः सकाशात्पराणिदेहाद्भिन्नानिआसन् तत्त्वमेववद वालिहननेवियद्गावीण्यंतत्रापिजनः अर्थात्त्वमेवाभिज्ञोसि वालिनात्वंबद्धः सतु
रामेणहतइतिभावः २२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शंभोरिति भवंचेन्नस्मरसि आकृतौभवमव्ययमितिविग्रहः नर्हिज्याघोषंकुरु अनीतोसमग्रांधियमीरयंति येतेष्वपि कुटिलः अन्यनीतिवांचिति शारवामृगाणांपति
र्योवालीनस्याप्यंतकंज्याघोषंकुवित्यर्थोव्यंग्यः २३ यइति सुबोधम् २४ नदूयेइति कृपणंसदैन्यंयथास्यात्तथाहैहयपतेः सकाशात् यत्पुलस्त्यस्त्वसितामहः यद्भिक्षा

रावणः शंभोःपर्वतकंदुकेनमहतीक्रीडाकृतायेनतंरेरेमानवराममास्मरभवंदेवेश्वरंरावणम् ज्याघोषंकुरुतादकानमसुराणांमंतकं
संयुगेयश्चानीतिसमग्रधीरकुटिलःशारवामृगाणांपतिः २३ रामस्तथापितंरावणंजघान लज्जावनम्रवदनांबुजःसन्मनाकृस्थितःरावणः
विहस्यरेरेमानवराम योमयानिहतोघोरेसमरेतवपूर्वजः अनरण्यःकिमद्यत्वांव्यथयत्यथलज्जितः २४ रामोनिःशंकंरेरेराक्षसाधम
पश्य नदूयेनःपूर्वंनृपतिमनरण्यंयदवधीर्जयोवामृत्युर्वायुधिभुजभृतांकःपरिभवः जितंमन्येकारागृहविनिहतंहैहयपतेः पुलस्त्योय
द्भिक्षामकृतकृपणंतद्व्यथयति २५ योरामोनजघानवक्षसिरणेतंरावणंसायकैःसःश्रेयोविदधातुवस्त्रिभुवनव्यापारचिंतापरः हृ-
द्यस्यप्रतिवासरंवसतिसातस्यास्त्वहंराघवोमय्यास्तेभुवनावलीविलसिताद्वीपैःसमंसप्तभिः २६ मकृततद्भिक्षाहननंव्यथयतीत्यर्थः २५

यइति वक्षोनिषेधाद्न्यांगहननंमायातं सासीतासप्तद्वीपैःसप्तभिःपृथिव्याद्यावरणैःसम द्वीपोस्त्रियामाभाचरणेपुंस्येवांतर्जलावनावितिजयंतः पुनःकीदृशीभुवनावलीवि
लसिता विलीयतेसर्वमस्मिन्निति विलंप्रकृतिस्तयासिता आवृतासप्रकृत्यावरणेत्यर्थः लीङ् विलापनेइत्यस्यविलमिति रूपं अन्यथाद्वीपानांत्रिभुवनांतःपातित्वाद्नर्थक्यप्रसं



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

गः स्यात् एतद्धनने अकस्मान्महारणः स्यादितिभावः अनेनविप्रलंभोन्मादावस्थाच दर्शितेतिभावः २६ सइति सरामः अवलेपोगर्वः सत्वमुत्साहः सएव सहायः तं
भजंतीति २७ तत्रेति सुबोधम् २८ बाणइति आत्मारुधिरस्तद्युक्ते शिरसि देहेधातुषु कूटस्थेजीवे प्यात्मा मतः पुमानितिविश्वः धातुनारुधिरंगृह्यते स्वसुस्तद्भगिन्याः
शूर्पणखायाः साहन्तर्याद्दूषणोपिरावणस्येदं रावणंरावणस्यामिषमित्यर्थः २९ क्लीबेति हेरामरणेषुप्राणत्राणाय याधीः सालज्जाप्रशांत्यैसंधयेसाक्लीबानामेव यथा

सग्रीोदरावणरुषाविहितावलेपः सज्जोबभूवदृढसंगरबद्धदीक्षः आपन्नभीतिहरणव्यवसायिनांहि प्राणास्तृणंविपुलसत्त्वसहाय
भाजाम् २७ तत्ररामोरतिंलेभेनप्रियाविरहार्दितः तत्सत्यंमनसिस्वस्थंरम्याणांरमणीयता २८ बाणोयंममताटकात्मशिरसिस्नातः
स्वसुर्नासिकाप्राणायामपरः खरत्रिशिरसांहुत्वादशास्याहुतिम् मारीचंचबलिंविधायतदनुस्नाचम्यवारांनिधिंभोक्तुंरावणमामिषंमृग
यतेभोदीयतांमैथिली २९ रावणस्तथापिसावज्ञम् क्लीबानामेवयुद्धेषुप्राणत्राणायरामधीः लज्जाप्रशांत्यैसंसत्सुमूर्खाणामिवमूकता ३०
गगनमंडलमवलोक्य रेकालत्वमकाललब्धविभवः स्वैरंसकामोभवशंभोर्भूषणनूतनैः शिवशिरोमाल्यैर्निजांगंमुहुः किंचत्वंचविरिंच्यसंचिनु
जगत्सर्गायबीजंक्वचित्सन्नद्धः करवालभीषणभुजोयुद्धायलंकेश्वरः ३१ विद्वत्सुलज्जाप्रशांत्यैमूर्खाच्छादनाय मूर्खाणांमौनस्वीकारः तथाकातर्याच्छादना
यसंधिरिति ३० रेइति अनवसरप्राप्तैश्वर्यः एतस्याशेषहननमैश्वर्यंहे विरिंच्यजगत्सर्गायपुनः सृष्ट्यैबीजंसंचिनुगोपाय निःशेषेणनरान् हनिष्यामीतिभावः ३१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अद्येति प्रकरणंसुबोधम् यागर्थः प्रतिपाद्यते यानिश्चये हेजानकि रामोयदिजीवति अद्यदारुणेरणेममाधरान्कामंयथेच्छंगृध्रः पास्यतीति द्वितीयोमुहुरर्थे कीदृशेर
णेमंद्विरेवीरशरणे ३२ रेरेइति बाणासनंचापं ३३ मंदोदरीति हाकष्टमागतम् अनेनरामेणदशाननोपि स्फुटंअसंशयं ईषज्जयः ईषत्करोजयोयस्य ईषज्ज



राममाक्षिपति अद्यवाजानकीरामकामंपास्यतिमंदिरे रणेवादारुणेगृध्रोमधुरानधरान्मम ३२ तत्राशोकवनिकास्थितविमान
मारुह्यजानकींरामरावणयोर्युद्धंदर्शयति त्रिजटासरमान्व मंदोदर्यपिसुंदरीपरिवृतालंकाचलशिखरमारुह्यपश्यतिरुद्रोपिसमुद्रमध्ये
एकेनचरणेनोपस्थितोयुद्धंपश्यति देवाः सर्वेविमानाधिरूढाः नभोमंडलगताः युद्धंपश्यंतिस्म रामः संहारभैरवइवक्रोधंनाटयतिका
लरुद्रइव रेरेनिशाचरपतेत्वरितंगृहाणबाणासनंत्रिदशदर्पहरंशरंच निर्वापयामिविरहाग्निममुंप्रियायामंदोदरीतरलनेत्रजलप्र
वाहैः ३३ इतिबाणान्स्पृशतिमंदोदरीसभयं उत्पाटयन्किमपिकौणपकोटिमंतस्तेजोहुताशनसमिंधनसामिधेनीम् हस्तादकीमकु
तबालतरः पृषत्कैरीषज्जयंस्फुटमनेनदशाननोपि ३४ यः ईषत्कारोजयोयस्य ईषज्जयत्वंद्योतयति यदायं बालतरोऽतिशयबालकः बाणैस्ता
टकामंतर्हृदयेयस्तेजोभवोग्निस्तस्यसमिंधनेसम्यगिंधनादानेसामिधेनींएध स्निमाहारकोमंत्रः सामिधेनीतां अकृतस्यतेजोग्निदीपनकर्त्री एधोमंत्रःसामिधे
नीतिशाश्वतः कौणपाराक्षसास्तेषांकोटिमुत्पादयन् सन् किमप्यनिर्वचनीयबलंरक्षः कोटि अपायंतरुणइतिभावः ३४ ७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आकृष्टेइति युधिधनुष्याकृष्टेसति रघुपतेः रामस्यवामः आयुधिहस्तः दक्षिणंआयुधिहस्तंअब्रवीदित्यन्वयः पाणावायुधिनद्वयोरितिशब्दशेषे आयुधानिधीयंते
रेरवाद्वारेणास्मिन्नित्यायुधि बद्धशृंखलेयंपद्यजातिः स्वरयोगवियोगाभ्यामर्थदा बद्धशृंखलेतिचित्तालंकृतौ दानादानसुभोजनेषुलंपुरतः पुरोवर्ती अधुनाइत्थं
पृष्ठतोगगनं किंयुक्तं वामान्योदक्षिणहस्तः पुनर्वाममब्रवीत् हेवामरणेममभीर्भयंन रावणवक्त्रपंक्तिंभेत्तुंप्रष्टुमागतोस्मीतिशेषः इतिवदन् सः दक्षिणः वोमंगलंद

राम भुजदंडः आकृष्टेयुधिकार्मुकेरघुपतेवामोब्रवीद्दक्षिणंदानादानसुभोजनेषुपुरतोयुक्तंकिमित्थंतव वामान्यः पुनरब्रवीन्ममन
भीः प्रष्टुंजगत्स्वामिनंक्षेप्तुं रावणवक्त्र पंक्तिमितियोदद्यात्सवोमंगलम् ३५ रामः कुशिकसुतसपर्यादृष्टदिव्यास्त्रमंत्रोभृगुपतिसहयोद्धा
वीरभोगीनबाहुः दिनकरकुलकेतुः कौतुकोत्तानचक्षुर्बहुमतरिपुकर्माकौतुकीरामदेवः ३६ यद्रावणोबहुभिरेवभुजैः करोतितद्राघवः
प्रतिकरोतिभुजद्वयेन कर्मद्वयंयदपितुल्यफलंतथापिरक्षःपतेर्दशगुणंनरवीरतुल्यं ३७ तत्र मंदोदरीजानकीच रेरावणास्तमुपयातु
सहत्वयार्कः श्रीराघवेसमरमूर्ध्निकृतप्रतिज्ञे मंदोदरीजनकजास्तनगावलंबिन्यर्केचकोरकवधूरिवचक्रवाकी ३८

घात् ३५ कुशिकेति तदारामदे
वः कौतुकीयुद्धोत्सवीयात् इतिशेषः वीराणांभोगाययोग्यौबाहूयस्यसः यद्वा वीरोरमणीयोभोगीनोवासुकिस्तद्वद्बाहूयस्यबहुमतंरिपुभिःकर्मशौर्यंयस्यसः ३६ ३७
रेरावणेति अद्यैनंहनिष्यामिइतिप्रतिज्ञा अर्के अस्तनगावलंबिनिमंदोदरीजनकजाच अर्कशैलस्थेर्केचचकोरकवधूरिवासीत् यथाचकोरीरात्रिमेवेच्छतिचंद्रकरा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मृतानुभवात् तथाचमंदोदरीरात्रौराक्षसानांबलातिशयात् तथासीतारात्रौरक्षोतिशयात् रामप्रतिज्ञाभयादितिभावः ३८ एकस्मिन्निति स्वस्यछेत्तुः अनुनयाय्य
माछिंधीत्यादिस्तवायय‍त्रशिरःकर्तने एकस्मिन्नेवशिरसिकृत्ते अन्यच्छिरस्तस्मिन्कृत्ते अन्यच्छिरोभावात् अनुभवाभावः छिन्नंछिन्नंमूर्धानं ३९ धनुरिति



राम्ः एकस्मिन्निनिपातेपिशिरसिक्रोधोपशांतिः कुतःकिंतुस्वानुनयायमूर्धनिधनंदृष्टंनयत्वारिणा त्वत्तोमूर्धबहुत्वतःफ
लमिदंसम्यङ्मयालभ्यतेछिन्नंछिन्नमवेक्ष्यराक्षसपतेःस्वंदुर्नयंज्ञास्यसि ३९ रावणः अत्यंतद्भुततरश्रीरामबाणादिताड
नव्यग्रः धनुर्निस्त्रिंशादिप्रहरणगलच्छेदकुपितोदशास्यःस्वान्मूर्ध्नोरघुपतिशरव्रातदलितान् करैरेकैरेकैर्नभसिभृशमादाय
युगपत्क्षिपन्नन्यैरन्यैश्चपलयतिदोर्विंशतिमपि ४० रामःसावष्टंभम् कल्पांतेयत्कृतांतैरिववरसमरप्रांगणेरामचंद्रोबाणैरुत्ती
र्णशाणैर्नवभिरपिदशग्रीवमूर्ध्नोनवैव चिच्छेदालोक्यभूयःसपुनरपिनवान्विस्मितःसन्मुहूर्तंविश्रम्यागस्त्यदत्तंतदनुरिपुवधाया
ददेब्राह्ममस्त्रम् ४१

एकैरेकैः करैः भृशंमूर्ध्नः अन्यैरन्यैः करैर्भृशंनभसिविक्षिपन्सन् युगपदेवविंशतिंचपलयति ४० कल्पांतइति रामः रणेनवभि
र्बाणैर्नवएवरावणस्यमस्तकान्चकर्त बाणसाफल्येविशेषणद्वयं भूयःकर्तनानंतरंसरामः पुनः अभिनवान् नवीभूतानालोक्यविस्मितः सन्मुहूर्तंविश्रम्यागस्त्य
दत्तंब्रह्मास्त्रंआददे गृहीतवान् अत्रेयंकथा ब्रह्मणास्यवरोदत्तो यावद्दशमोमध्यस्थोमूर्धानविच्छिन्नस्तावदन्यानिशिरांसिकृत्तान्यपि अकृत्तानिभविष्यंतीति ४१



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पैतामहमिति पैतामहं ब्रह्मास्त्रं अंसः बाणः तत्तद्दयं भित्वा अस्य रावणस्य प्राणान्नीत्वा भुविविवेशेत्यन्वयः ४२ सुगमं गद्यम् भिन्नेति अथविप्रलंभगुणकीर्तन
माविः करोति हेप्रिय तुभ्यंनमः किंभूताय भिन्नानि यानींद्रगजबंधूनां सिंधुराणां गजानां शिरांसि तेभ्यः संपतितुं शीलं येषां तैः मौक्तिकैः कृत्वा शश्वत् याविजयप्रश

पैतामहं रघुपतिः समरेतिकोपाद्बाणंमुमोचतद्दयेदशकंधरस्य भित्वासतद्धृदयशोणितशोणगात्रः प्राणान्विवेशधरणीतलम
स्यनीत्वा ४२ मंदोदरीसकलसुंदरसुंदरीभिः परिहृतागलदविरलनेत्रजलप्रवाहैः सीतापतेर्विरहानलेनसहलंकापतेः प्रतापानलंनि
र्वापयंतीहाहाकारं घोरस्फूत्कारैः कुर्वतीझटितित्रिकूटाचलादुत्सत्यसमरभूमौमहानिद्रांगतस्यनिजप्राणनाथस्यलंकापतेश्चरणक
मलयोर्निपत्य भिन्नैरावणबंधुसिंधुरशिरः संपातिभिर्मौक्तिकैः शश्वद्दिग्विजयप्रशस्तिरचनावर्णावलीशिल्पिने नाकांतः पुरिकाकपो
लविलसत्काश्मीरपत्रांकुरश्रीविन्यासविनाशभीषणभुजस्तंभायतुभ्यंनमः ४३ हाप्राणेशलंकेश भूयिष्ठानिमुखानिचुंबतिभुजे
भूयोपिरालिंग्यतेचारित्रव्रतदेवतापिभवताकांतेनमंदोदरी हालंबोदरकुंभमौक्तिकमणिस्तोमैर्भ्रमैकावलीशिल्पेवागधमेणिकस्य
भवतोलंकेंद्रनिद्रारसः ४५ स्तिरचनालिखनंतयुक्तायावर्णावलीतस्याः शिल्पिनेलेखकायगजकुंभच्युतैर्मुक्ताहारैरेवात्मजयप्रशस्तिंविलिखतीत्यर्थः नाकां
तःपुरिकानांस्वर्गांतः पुरस्थमृगदृशांकपोलेषुविलसत्कुंकुमपत्रस्यांकुरः चित्रंतत्रयः श्रीविन्यासः शोभातिशयः तस्यविनाशायभीषणः भुजस्तंभोयस्य ४३ भूयिष्ठा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नीति मंदोदरी ते भूयिष्ठानि बहूनि मुखानि चुंबनिकां तेन भवता रयविनाशाय ताभिर्भूयोभिर्बहुभिर्भुजैरालिंग्यत इत्यन्वयः पतिव्रता देवी हेलंकेंद्रभवनोपि निद्रारसो यातः
हा कष्टं ऋणिनो निद्रारसाभावात् ऋणमेव द्योतयति लंबोदरः गजाननो गणेशस्तस्य कुंभयोः यो मौक्तिकसमूहास्तैर्मयः एकावलीहारभेदः एकावल्येकयष्टिके त्यम
रः तस्याः शिल्पैः भिन्निर्माणे वाचा अधमर्णिकस्यास्य लंबोदरं विभिद्य तव हारं करिष्यामीति वा उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमादित्यमरः ४४ एकेनेति अ

एकेनैकसमुद्धृतो हरगिरिर्द्वाभ्यां त्रिलोकी जिता यस्याष्टादशभिर्भुजैरवसरः शस्त्रस्य नासादितः सोप्येनं द्विभुजं मनुष्यमहह क्र
व्यादवीरोरिपुं प्राप्य व्यर्थभुजो रणे विनिहतो दैवाय तस्मै नमः ४५ जातिर्ब्रह्मकुले ग्रजो धनपतिर्यः कुंभकर्णोनुजः पुत्रः शक्रजयी स्व
यं दशशिराः पूर्णा भुजा विंशतिः दैत्याः कामचरा रथश्च विजयी पारे समुद्रं गृहं सर्वं निष्फलितं तथैव विधिना दैवे बले दुर्बले ४६ कालेन वि
श्वविजयी दशकंधरो भूद्दुर्गाचलोद्धरणचंचलकुंडलाग्रः संस्कारमग्निदहनाय स एष कालश्चाज्ञां विना रघुपतेः प्लवगैर्निरुद्धः ४७ दु
र्गं त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदश्च वित्तं संजीविनी यस्य मुखाग्रविद्या स रावणः कालवशाद्विनष्टः ४८

थास्य बलं द्योतयति दैवं प्रण
मति यस्य रावणस्य द्वाभ्यां भुजाभ्यां त्रिलोकी विजिता वशीकृता तयोरेकेन एषः हरगिरिः समुद्धृतः एकेनान्ये लोका जिता इति द्रष्टव्यं सोपि रावणः एनं रामं प्राप्य
व्यर्थभुजः सन् येन दैवेन विनिहतस्तस्मै दैवाय नम इति ४५ जातिरिति क्षेपकः ४६ ४७ कालस्य सर्वतो दुर्निवारत्वं द्योतयति दुर्गमित्यादि पंचभिः पद्यैः ४८



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इहेति शिवशिवेति कष्टं कष्टं तानि शिरांसि लुठंति चंच्वाक्षेपेणेतस्ततश्चालयंति रेजुः विलसंति स्म आविर्भवंति ४९ जनकतनयामिति रागी युद्धोत्साहवान्
समो जनकतनयां त्यक्त्वा लंकातः स्वशिबिरे आनीय यद्वा यो जनकतनयां त्यक्त्वा रागी रागवान्यतः एवंभूते दशकंधरे हते सति सर्वं सुबोधम् ५० चापेति चा

इह खलु विषमः पुराकृतानां भवति हि जंतुषु कर्मणां विपाकः शिवशिरसि शिरांसि यानि रेजुः शिवशिव तानि लुठंति गृध्रपादैः ४९
ततो लक्ष्मण वायुपुत्रौ विमाने जानकीमारोप्य सत्वरमानीतवंतौ जानकी ससंभ्रममुत्थाय लज्जां नाटयति रामः जनकतनयां त्यक्त्वा
रागी हते दशकंधरे तदनु विरहज्वालाजालाकुलीकृतविग्रहः रघुपतिस्त्रपादोनाधोनोर्ध्वं न तिर्यगवेक्षते मुकुलितदृगंभोजद्वंद्वः समाहितव
त्स्थितः ५० साश्रु स्ववंश्यपरिजनलज्जया च हनूमान्वा तर्जानाकि चापालिंगनभंगुरां गमदनन्यस्तैक हस्तांबुजं मध्येमुष्टि निविष्टपं
चक शरं बिभ्राणमन्यत्करे वीरश्रीनरवरक्षतैरिव नवैर्बाणव्रणैरंकितं वीरं राममवस्थितं प्रणमत प्रोन्मथ्य लंकाभटं ५१ जानकीस्वग
तं तापच्छेदसुधाकरस्तनुभृतां क्रोधानलांभोधरः सारासारविवेकशोकभवनं हर्षस्य बीजाश्रयः कालव्यालविषस्य गारुडमणिर्धैर्य
द्रुमारामभूः कैवल्यप्रतिभूर्घटेत सुकृतै रामस्य सत्संगमः ५२

पालिंगनेन भंगुरं यदंगं तेन मदनमिव अन्यत्करे द्वितीयहस्ते मुष्टेर्मध्ये मध्यममुष्टिनि
विष्टो यः पंचकशरः शरपंचकस्तं बिभ्राणं यद्वा पंचकं पंचात्मकं रावणदेहं तद्धंता शरः पंचकशरः वीरश्रीर्विजयलक्ष्मीस्तस्या नरवक्षतैरिव तमिति प्रसिद्धं ५१ कालेति बी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

जमाश्रय भूतं अन्यथांकुरजातेर्बीजवर्दनुपलब्धिप्रसंगः स्यात् मोक्षजनयितामोक्षद इति सुबोधं ५२ ननु चिरात्प्रीष्टप्राप्तौ कथमस्य धैर्यमित्यत आह तत्रेति रामस्तत्रत
स्यां सीतायां रतिं यत्नलेशेन लसत्यमेव नन्वनिच्छुश्चेत्प्रियाविरहार्दितोपि न तु तरसौं दर्यादिति चेन्न रम्याणां वस्तूनां रमणीयता तदनुभावः स्वस्थे मनसि भवति न तु व्यग्रे अ

इति रघुपतेश्चरणकमलयोः शिरोमधुकरेण मकरंदमनुभवितुमिच्छति रामः उपसृत्य साशंकं हे महांतो जनाः यद्यपि प्रिया पतिव्रता
तथापि चिरं परमंदिरस्थां दिव्यमंतरेण कथं मां स्प्रष्टुमर्हति इत्याकर्ण्य रामवाक्यादाकाशादवतरंति स्म ब्रह्मादयः ततो दिव्योपकरणं नाटय
ति तत्र रामो रतिलेशेन प्रियाविरहार्दितः यत्सत्यं मनसि स्वच्छे रम्याणां रमणीयता ५३ जानकी सत्वरं ज्वलत्पावकमुपगम्य भो भगवन्पा
वक मनसि वचसि काये जागरे स्वप्नमार्गे यदि मम पतिभावो राघवादन्यपुंसि तदिह दह ममांगं पावकं पावकत्वं सुललितफलभाजां त्वं हि क
र्मैकसाक्षी ५४ इति ज्वलत्तीव्रदहनांतराले देहं चिक्षेप अथ वानरभटाः सत्यं कालहुताशनस्य वहतो जिह्वातिलीलासरस्यंगारे सरसीरु
हं कमलभूरालोक्य सीताननं शुद्धेयं जनकात्मजेत्यभिदधौ तावन्मुकीशेश्वरैः फूत्फूत्काररवैरपूरि रभसात्तावन्नभोमंडलं ५५ ततो रामः सीतां दिव्यग्रह
णादिनाव्यग्रत्वं सुबोधं ५३ सुबोधं ५४ सत्यमिति कमलभूः ब्रह्मा हुताशस्य जिह्वाज्वालास्तासां पंक्तय एव लीलारसः क्रीडार्थं सरसि तस्मिन्सीताननमेव सरसीरुहमालो
क्य इयं सीता शुद्धा इत्यावेदयत् अवदद्देवतावत्कीशेश्वरैः सुग्रीवादिभिः फूत्फूत्कारशब्देर्नभोमंडलं रभसात्त्वरया अपूरि पूरितं कीदृशस्य कालहुताशनस्य सत्यं यथार्थं शुद्धाशुद्धनिर्ण



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यंवहतः ज्ञापयतः किंभूते जिह्वालीलासरसि अंगारे अंगारप्रचुरे अत्रैवार्थेवाशब्दः अनुव्यवधानात्कथमडागमः अत्रोक्तं कविकामधेनौ धातवः शब्दप्रत्य
येपि उपसर्गाः धातुसंज्ञाः स्युः धातुत्वादडागमः कीशोरुत्त्रीवानरेभिक्षावितिविश्वः सुबोधम् ५५ ५६ श्रीरामेति सीतायाः विनोदार्थंयाप्रीतिस्तयाबहुतरं

श्रीरामः सानंदं वन्हिंगतायाजनकात्मजायाः प्रोत्फुल्लराजीवमुखंविलोक्य उवाच रामः किमहोसुरादीनंगारमध्येजलजंवि
भाति ५६ जानकीसानंदं श्रीरामोदयिताविनोदविपुलप्रीतिप्रभूतीभवत्प्रस्वेदांबुकणावृतस्यकमलेदिव्योत्थिताजानकी आग
म्याशुससंभ्रमंबहुतरांभक्तिंदधानापुनस्तत्पादौमणिकंकणोज्ज्वलकरानैवस्पृशत्यद्भुतम् ५७ अहल्यावच्चरणस्पर्शमात्रेणकंकण
मणयोपियोषितोमाभूवन्नितिभावः सुग्रीवोरामंविज्ञापयति देव इयमियंत्वयिदानवनंदिनी त्रिदशनाथजितः प्रसवस्थली कि
मपरंदशकंधरगेहिनीत्वयिकरोतिकरद्वययोजनम् ५८ रामोनम्रानानोभूत्वाकिमाज्ञापयतिमहाभागामंदोदरी धन्यारामत्वया
माताधन्योरामत्वयापिता धन्योरामत्वयावंशोपरदारान्नपश्यसि ५९ भवत् यत्प्रस्वेदांबुकणालंकृतं आस्यकमलंयस्य एवंभूतेरामेसतिनिस्व
यमपिदिव्यादग्निशपथात् उत्थितासससंभ्रमंसादरमपिशीघ्रमागम्यतत्रापि दृढभक्तिवतीसतीरामपादौनस्पृशति अद्भुतमित्यर्थैएवप्रयोगः अस्पर्शेहेतुंद्योतयति म
णिकंकणोज्वलकरेति ५७ अथास्याः पितृपुत्रपतितोमहत्वंद्योतयति इयमियमिति इयमियमित्यादरेवीप्सात्वयिनिमित्तं अपरंकरद्वययोजनादन्यत् किन्नकिमपि ५८
५९

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अत्रेति नागपाशबंधनं रावणशक्त्या अर्थान्ममेति ६० अथ हनूमदुपकृतिं श्रावयन् रावणभयमाह हंतीति हंति प्रहरतीति ज्वलितः कृशोल्पतरः कपिरिति श्रुत्वाश्री

साधु राम साधु अतः परं मम का गतिः रामः महाभागेन खलु राक्षसीनां सहगमने धर्मः अतस्त्वया बिभीषणालयमास्थाय लंकाचले राज्यं चिराय भुज्यतामिति बिभीषणं लंकाधिपत्याभिषेकं नाटयति ततो रामः आत्मानं पुष्पकविमाने जानकीं चारोप्य समरभूमिं दर्शयति प्रिये जानकि पश्य अत्रासीत्फणिपाशबंधनविधिः शक्त्या भवद्देवरे गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः दिव्यैरिंद्रजिदत्र लक्ष्मणशरैर्लोकांतरं प्रापितः केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कंठाटवी ६० हंतीति ज्वलितः कृशः कपिरपि व्रीडावनम्राननो लीलालंघितवाहिनीपतिरिति श्लाघाचलत्कंधरः रामस्यायमितीर्ष्यया कलुषितः पश्यन्प्रिये त्वत्कृते विक्रामत्यनिलात्मजे दशमुखः कं कामवस्थां गतः ६१ जानकी सविस्मयं भो प्राणनाथ तथाविधाद्दुर्नांतात्कथमिहागतः रामः सहर्षं प्रिये जानकि निवासः कांतारे प्रियजनवियोगाधिरधिको धनुर्मात्रं त्राणं रिपुरपि धुरीणः पलभुजां अकूपारं पारे वसति च स कात्र प्रतिकृतिर्न मित्रं सुग्रीवो यदि तदियती राघवकथा ६२

डयावनम्राननं यस्य वाहिनीपतिः समुद्रः तटिनी वाहिनी सिंधुरिति हलायुधः सर्वं सुबोधम् ६१ हनूमदुपकृतिमुक्त्वा सुग्रीवोपकृतिं कथयन्नात्मनः कृतज्ञतामाविष्करोति निवासेति कांतारे अतिदुर्गमे एतेनान्यजनसंगमोपि निरस्तः तद्वियोगमनोव्यथायासः पलभुजां मांसाशिनां धुरी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

णः अनेनमनुष्यभक्ष्यत्वमुक्तम् सचरिपुः पुनः अकूपारंपारे समुद्रंपारे वसति एतन्निपातः अत्रैतादृश्यवस्थायांकाप्रतिकृतिः कः प्रतीकारः परंतु यदिसुग्रीवो
मित्रंनस्यात् तदाराघवस्यममकथा एतावती वनस्थोरामस्तद्भार्याराव णेनहृतेति ६२ पश्येति हेप्रिये पश्यचंद्रमाउदेति यंदृष्ट्वासर्वः प्रफुल्लति तथाकामश्चेति हर
शिरोभूषणंकलारूपेण एतेनात्ररुद्रयोगादेवबियोगिदाहकत्वमुक्तं ताराएवमौक्तिकानि तेषांहारस्यमध्यमुख्यरत्नं रतिकांच्यामध्यमणिः एतेनास्यदर्शनात् का

अत्रांतरेचंद्रोदयः बभूव रामः देविपश्य पश्योदेतिवियोगिनोदिनमणिः शृंगारदीक्षामणिः प्रौढानंगभुजंगमस्तकमणिश्चंडीश
चूडामणिः तारामौक्तिकहारनायकमणिः कंदर्पसीमंतिनीकांचीमध्यमणिश्चकोरतरुणीश्चिंतामणिश्चंद्रमाः ६३ रामः प्राचीनः
स्मृतविरहव्यथातिभीतः काकुत्स्थः कृतकुतुकाक्षिमीलनलीलः संपूर्णेशशिनिचिरायलग्नदृष्टेः प्रेयस्याः स्थगयतिलोचनेकराभ्यां
६४ अत्ररात्रौसुखसुप्ताः सर्वेयथास्थानंप्रातरागत्यबिभीषणः रामपादौप्रणम्यदेव किंकुर्वाणपयोधिसेवितगृहोद्यानामुदेस
र्वतोलंकेयंरघुवंशविक्रमकथाबीजप्ररोहस्थली देवेनात्रदशाननस्यदशभिश्छिन्नैःशिरोभिः क्रमादेकैकेनशतंशतंशतमखस्यामो
दितादृष्टयः ६५

मकेलौरत्यतिशयोद्योतितः चिंतामणित्वेन संयोगिनीनांकेलिप्रदीपकत्वमुक्तं ६३ प्राचीनेति रामः प्रेयस्याः लोचनेकराभ्यांस्थगयति-
आच्छादयति नेत्राच्छादनेहेतुमाह संपूर्णेशशिनिचिरंलग्नादृष्टिर्यस्याः आत्मन्याच्छादकत्वहेतुमाह प्राचीनापूर्वकालीनास्मृतायामृगनिदानाविरहव्यथातया

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भीतः आच्छादने वैदग्ध्यमाह कृताकुतुकार्थे निलयनज्ञानार्थं अक्षिनिमीलनस्य लीलाक्रीडनं येन सः कनकमृगवन्मृगांकमृगमपि याचयिष्यतीति भावः ६४
किमिति अत्र लोकरीत्या सुखाभावः रामगुणस्मरणात् सुखं द्योतयन्नाह हे रघुवंश इयं लंका किं सुखायन कस्मैचिदिति किमाक्षेपे अल्पसुखायेयं कीदृक् लंका स
र्वतः उपकुर्वाणो यः पयोधिस्तेन सेवितानि गृहोद्यानानि यस्यां सा नानोपकारगंभीरः कुर्वाणो नापरः सुखीति शाश्वतः अत्रापि रत्नासनदुर्गविधायित्व नानाजनसे
वनादिनोपकाररता अथानिच्छां द्योतयति यत्र देवेन भवता रावणस्य छिन्नैर्दशभिः शिरोभिः क्रमादेकेन शिरसा इंद्रस्य शतंशतं दृष्टयः मोदिताः सुखिनः कृताः स

रामस्ततस्तत्काल योग्योपकरणैश्छत्रचामरादिभिर्बिभीषणं संभाव्य पुनरयोध्यां राज्यभोगाय प्रस्थितः तत्र सुग्रीवः देव वा
जिव्रातखुरप्रहारदलितक्षोणीरजोभिर्युतः सांद्रैर्जीर्णकपोतकंठरुचिभिर्व्योमेदमास्तीर्यते किंचानेककरींद्रगंडविलसद्दानांबुधा
राघनं संग्रामं प्रथयंत्यमी परिमलप्रोद्गारिमंदानिलाः ६६ हस्वनयनत्वात् अत्रेच्छायामाशब्दः कोपेच्छयोर्माङ् इष्टः स्यादिति हैमी रघुवंशशब्दोऽत्रापि रघु
वंशस्य या विक्रमकथा सैव बीजं तस्योत्पादकं स्थलं यस्यां सा ६५ वाजीति हे राम वाजिव्राताः अश्वसमूहास्तेषां खुरप्रहारेण दलिता चूर्णीकृता या क्षोणी तस्या रजोभिरिदमग्रतो
दृश्यं व्योम आच्छाद्यते किंभूतैः वृद्धकपोतकंठस्येव रुचिर्येषां तैः किंचान्यदपि अमी परिमलवाहिनो मंदवायवः संग्रामं प्रथयंति सर्वतः कथयंति परिमलप्रापकत्वात् किंभूतं
संग्रामं अनेके ये करींद्राः गजास्तेषां गंडेभ्यः सकाशात् विगलंति च तानि दानानि च मदजलानि तेषां धाराभिर्घन इव स वर्षघनं पंकिलं वा रेणुमदैक्यात् एतत्कटगंधेन सर्वतो द्यापि
रणस्य तात्कालिकत्वमिति भावः ६६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

दृष्टइति सकौतुकं स्वयंपृष्टेरामेपरंविस्मिते सति व्यावृत्तं समुद्रदर्शनान्निवर्तितंमुखमेवचंद्रोयस्याः सा ६७ रामोब्धिंदर्शयति स्नात्वेति तेसेतुशैलाः समु
द्रवेलागिरयः पुरस्ताद्दृश्यंते किंभूताः निशिज्वलद्भिः औषधीनांनिवहैः तदंभस्थिताः समुद्रजलस्थायिनः कपीनांशिबिराः अवमोचनास्तान् स्मारयितुंशीलंये

ततः समुद्रेसेतुमासाद्य जानकीभोप्राणनाथार्यपुत्र दृष्टोयंसरितांपतिः प्रियतमक्वास्तेससेतुः परंक्वेतिक्वेतिमुहुर्मुहुः सकुतु
कंपृष्टेपरंविस्मिते अत्रासीदयमत्रनात्रकिमितिव्यग्रेनिजप्रेयसिव्यावृत्तास्यसुधानिधिः समभवन्मंदस्मिताजानकी ६७ मुखदर्शन
क्षुब्धजलधिकल्लोलैराच्छादितस्यसेतोः प्रकटनायमुखव्यावृत्तिरितिभावः स्नात्वापीत्वादरीभिर्जलधिमथचिराद्दृष्टमैनाकबंधुप्री
तिप्रौढाश्रुपूरद्विगुणमहिमभिर्निर्झरैः पूरयंतः येविन्यस्ताः पुरस्तान्निशिनिशिनिवहैरौषधीनांज्वलद्भिस्तेदृश्यंतेतदंभस्थितक
पिशिबिरस्मारिणः सेतुशैलाः ६८

षांतेके येविन्यस्ताः सेतुबंधनार्थंकीदृशाः दरीभिः जलधिंस्नात्वापीत्वानिर्झराः प्रस्रवणान्पूरयंतः आपोस्त्रीनिर्झ
राद्वयोरितिधरणिः कीदृशीभिर्दरीभिः चिराद्दृष्टोयः मैनाकएवबंधुस्तस्मिन्याप्रीतिस्तयाप्रौढायेअश्रवस्तैर्द्विगुणोमहिमायासांताः यद्वादरीभिर्जलधिंपूरयत
इतियोज्यं पूरणेहेतुः चिराद्दृष्टेति किंभूताः सेतुशैलाः निर्झराः प्रस्राविणः ६८ यदेति अयमपांभर्तासमुद्रः हारावल्याः वलयस्यचलक्ष्मींवितनुतेविस्तारयति
अत्रहेतुमाह दूरादापतितुंशीलंयेषांएवंभूतानित्रिदशयुवतीनांनेत्राणितेभ्यः सकाशात्सुलभांसुखेनलब्धुंयोग्यां अयमर्थः यदामंडलीकृतश्रेणीभूतदेवस्त्रि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

यः केनापि कौतुकेन एनं पश्यंति तदास्त्रीपंक्तिरेव हारावलीतत्र येरश्मयः वलयानि तदंतःपातिमंडलानि यदैतां लक्ष्मीं वितनुते तदास्य सेतुर्महानाटक इव महन्नृत्य
मिव भवति सेतौ हेतुमाह माणिक्याश्च स्फटिकाश्च कनकग्रावाणश्च तद्युक्तैः शिखरैः अशून्यात्मा निर्मितशरीरः माणिक्यादिषु देवस्त्रीप्रतिबिंबाक्षेपवत्वेन नृत्यमिव
दृश्यत इति भावः महानाटकोपि ईदृग्भवति महानाटकः हारेण वलयेन च लक्ष्मीं वितनुते बद्धांगनाबद्धबाहुप्रेक्षणं हारको मतस्तदंतरालपंक्तिस्थविक्रियावलयंभ

यदा दूरापाति त्रिदशयुवती नेत्रसुलभामपांभर्ता हारावलयलक्ष्मीं वितनुते तदायं माणिक्यस्फटिककनकग्रावशिखरैरशून्यात्मा
सेतुर्भवति महानाटक इव ६९ जगाम रामः सह सीतया स्वां पुरीमयोध्यां सह वानरेंद्रैः प्रत्यागते स्तैर्भरतादिभिश्च राज्येभिषिक्तो मु
निभिश्चिराय ७० हित्वैकां हरशेखरप्रणयिनीं पीयूषभानोः कलां दिक्पालावलिमौलिभूषणमणीन् गृह्णीत सर्वानपि तैः कांचीरचि
ताचिराय बहुशः श्रोणीतटे जानकी गायंतीनिजमंजुसिंजितगिरा त्वद्विक्रमाडंबरम् ७१ वदिनि संगीतमुक्तावल्यां दूरादापातीत्यादि पूर्ववत्पु
नः किंभूतो नाटकः माणिक्यं यः स्मितैर्भावः कटाक्षैः स्फाटिको मतः अंगहारस्तु संजातो हेमजन्मा चतुर्विध इत्यपि संगीते एतेषां ग्रावाः अभिनयनानि तेषां शिख
रैराधिक्यैः अशून्यात्मा पूर्णः ग्रावो भिनयनं हार इति धनंजयः पुनः किंभूतः सेतुः तत्प्रमाणबद्धः क इव अपांभर्तैव एवमुभयथा वर्णनीयं मयैव व्याख्यातं अन्यदप्यू
ह्यमप्रसन्नैः ६९ ७० ७१ रामेति यद्यद्दौत्यादिकं यत इति यदि त्रैलोक्यनाथोसि तथापि गुरोर्वालिनः वचः वैरं न त्याज्यं वैरं वाचो वचो नित्यमिति विघ्नः ७२



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पश्येति त्वदभिमतं त्वयानुमानितं सैन्यं सभवानपि रंगावतारे अवतरतु येन त्वया नातो हतः पितृनिधनं नाशं अनुस्मृत्य एकेन दोष्णा सुग्रीवादिभिः सार्द्धं मथ्ना
मि ७३ श्रुत्वेति सकरुणः रामः लक्ष्मणोपि तं वालिनं निरपराधिनमाहतं मत्वा पुरतोंगदाग्रे कृतांजलिपुटो बभूव ७४ आकाशेति एनं रामं मथुरावतारे कृष्णरूपि

अंगदः अकस्माद्वानरभटेभ्यः समुत्पत्य पितृहंतारमवलोक्य क्रोधं नाटयति दोस्तंभास्फालकेलिमभिनीय रामचंद्र त्वयादि
ष्टं यद्यत्तत्तन्मयाकृतं यतस्त्रैलोक्यनाथोसि न च त्याज्यं गुरोर्वचः ७२ पश्य श्रीरामचंद्र त्वदभिमत महो लक्ष्मणेनापि पूर्णैस्तूर्णं रंगा
वतारे वतरतु सभवान्नाहतो येन तातः सुग्रीवेणांजनेयप्रमुखभटचमूचक्रवालेन सार्द्धं त्वामेकेनांगदो हि पितृनिधनमनुस्मृत्य म
थ्नामि दोष्णा ७३ श्रुत्वांगदस्य महतीं समरप्रतिज्ञां तेचुक्षुभुः कपिचमूपतयः सरामाः सौमित्रिरप्यनपराधिनमाहतं तं मत्वा कृतां
जलिपुटः पुरतो बभूव ७४ आकाशे आकाशवाण्यभवदेव महोत्सवाली दाशोहानिष्यति पुनर्मथुरावतारे श्रुत्वा विलोक्य रघुनंदनवा
नराणां कारुण्यमंजलिपुटं सरणान्निवृत्तः ७५ अंगदः पितृवधप्रतीकारो भविष्यतीति सानंदं कोपमपहाय शांतिमेत्य रामं स्तौति
देव अकर्णमकरोच्छेषं विधिर्ब्रह्मांडभंगधीः गुणानाकर्ण्य रामस्य शिरः कंपभयादिव ७६ णं वाल्येव दाशः व्याधरूपधारी कैवर्तेदाशधी
वरावित्यमरः इति वाणीं श्रुत्वा रघुनंदनस्य तथा वानराणां च कारुण्यं यथास्यात्तथांऽजलिपुटमवलोक्य रणान्निवृत्त इति ७५ अकर्णमिति एतेन गुणा

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

नामनोहारित्वमुक्तं कंपोत्र सात्विकः यद्यपिशेषशिरः कंपनेनत्रैलोक्यमेवनश्यति तथापि तदुपरिस्थानां हविर्देयाभावाद्ब्रह्मांडभंगउक्तः ७६ कूर्मइति दीपिकादीपकेनात्रप्रतापवर्णनं सुबोधमेव अंगयष्टिर्दीपिकादंडः ७७ कैलासेति हेक्षितिपते राघव तस्यास्तवकीर्तेः स्तटाकः आनंत्यमस्ति तटाकोनंततनायांनां तडागेपिफ्मृशाधमेइतिधरणिः कस्याः यस्याः कैलासोनिलयः स्थानं तुषारशिखरीहिमवान् विंदिः उपवेशस्थानं विंदिस्तंभोपवेशनावितिविश्वः हिमरुचिश्चंद्रं

हनूमान् कूर्मः पादोंगयष्टिर्भुजगपतिरसौ भोजनंस्नूतधात्री तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः अर्चिश्चंडांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना शत्रुश्रेणी पतंगाज्वलतिरघुपतेत्वत्प्रतापप्रदीपः ७७ कैलासोनिलयस्तुषारशिखरी विंदिर्गिरीशः सरवास्वर्गगागृहदीर्घिकाहिमरुचिश्चंद्रोपलोदर्पणः क्षीराब्धिर्नव पूर्तकंकिमपरं शेषस्तुशेषत्विषो यस्यास्यादिह राघवक्षितिपतेकीर्तेस्तटाकस्तव ७८

द्रोपलः चंद्रकांतपाषाणश्चदर्पणोमुकुरः पूर्तकंतटाकः शेषोनंतः शेषत्विषोंगदीप्तयः शेषशब्दादन्योप्यर्थः यस्यस्यादितिपाठे तवकीर्तेस्तटाकः तडागःस्यात् अस्तुयस्यतडागस्यकैलासोनिलयः नितरांलीयते येनसजलांतस्तंभः हिमवान्विंदिर्बहिःस्तंभः गिरिशोरुद्रः सरवातदधिष्ठातादेवः गृहदीर्घिकातदंतरालकुंडः चंद्रः चंद्रोपलोपिदर्पणः तदंतर्ग्रावाणः चंद्रोपलेतिजात्येकत्वम् दर्पणेग्रावमुकुरावितिधनंजयः नवपूर्तकंजलयुक्तखानितदेशः नव्यपानीययोर्नवइतिविश्वः पूर्तकंजलखानितभितिहैमी शेषदीप्तयः सेतुरेतस्यनास्त्येवानंतत्वात् ७८ ७९



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

क्रांत्वेति हे रावण हंत त्वत्कीर्तिरेव हंसी भूवलयं क्रांत्वा भ्रांत्वा अत्रात्मपूर्त्यभावात् ब्रह्मलोकं गता ब्रह्मलोकमिति वक्ष्यमाणार्थावगमाद्गम्यते सापि तत्रया त्वागत्वा ब्रह्मणो यो मरालो हंसस्तत्संगमवशाद्गर्भिण्यभूत् तया कीर्तिहंस्या गंगासमीपे शीतद्युतेर्मंडलं मुक्तं जनितं तत्तदेतद्भाति किंभूतं मंडलं कुंदवदवदातमुज्ज्वलं पुनः किंभूतं विशांकुरं विशाः कमलनालतंतवः अंकुरा नालस्थानीया यस्य तत् ततं विशालं यद्वा विशां प्रजानां कुरः आनंदो यस्मात्तत् लोकाल्हादकमिति कुरआ

क्रांत्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी गता सापि ब्रह्ममरालसंगमवशात्तत्रैव गर्भिण्यभूत् यात्वा व्योमतरंगिणीपरिसरे कुंदावदातं त्वया मुक्तं भाति विशांकुरं ततमिदं शीतद्युतेर्मंडलम् ७९ रामराम महावीर केवयं गुणवर्णने यत्कीर्तिकामिनीभाले कस्तूरीतिलकं नभः ८० लक्ष्मीस्तिष्ठति ते गेहे वाचि भाति सरस्वती कीर्तिः किं कुपिता राम येन देशांतरं गता ८१ राम त्वद्भुजदंडडिंडिमडमत्कारप्रतापानलज्वालाजर्जरकीर्तिपारदघटीविस्फोटिताबिंदवः भोगींद्राः कति तारकाः कति कति क्षीराब्धयः कत्यपि प्रालेयाचलपांचजन्यकरकाः कर्पूरकुंदेंदवः ८२ नंदवेदयोरिति विश्वः एतेनैतद्ध्वनितं गर्भमोचनोदकं गंगा कुंदाः जन्मकर्माणि विशांकुरं नालश्चंद्रः पुत्र इति सर्वे कीर्तेरेवोत्पन्ना इति ध्वनिः ७९ रामेति एतेन कीर्तेरानंत्यमुक्तं ८० लक्ष्मीति अयं व्यंजकः अनेन कीर्तेर्दूरगामित्वमुक्तं ८१ रामेति हे राम त्वद्भुजयोर्डिंडिमायाडमत्कारेण शब्देन रामो विश्वजयीति घोषणं डिंडिमा स एव डमत्कारो धमनशब्दः तद्युक्तश्चासौ प्रतापानलश्च तस्य ज्वालाभिर्जर्जरा विदलीकृता या कीर्तिरेव पारदघटी सा विस्फोटि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तारखंडीकृता अमीतस्थाः बिंदवः जाताइतिशेषः केऽमीफणिगींद्राइत्यादयः हिमगिरयः पांचजन्यः शंखः करकः शेषनागः शेषेपिकरकः पुमानितिनामशेषे ८२
८३ खद्योतेति हे रघुपते इत्थमुक्तरीत्यातवयशोवर्णयतः ममनभइत्यर्थेचकारः इतिस्मृतेर्गोचरंस्मरणगोचरमभूदिति इतिकिं यस्मिन्नभसि सविताखद्योतदीप्तिमातनोति शशीजीर्णमर्कटिकागेहप्रभामाश्रयति तारादयोमशकतामायांतितच्चनभः शुभ्रेतवयशसिभ्रमवदाचरतेनतः कारणाद्वाचोमुद्रि

अत्युक्तौयदिनप्रकुप्यसिमृषावादंनचेन्मन्यसेतद्रूमोद्भुतकीर्तनेनरसिनाकेषांनकंडूयते रामत्वत्तरुणप्रतापदहनज्वालावलीशोषिताः सर्वेवारिधयस्ततोरिपुवधूनेत्रांबुभिः पूरिताः ८३ खद्योतद्युतिमातनोतिसवितार्जीर्णोर्णनाभालयच्छायामाश्रयतेशशीमशकतामायांतितारादयः इत्थंवर्णयतोनभस्तवयशोयातंस्मृतेर्गोचरंयच्चास्मिन्भ्रमरायतेरघुपतेवाचस्ततोमुद्रिताः ८४ कृत्वामेरुमुलूखलंरघुपतेवृंदेनदिग्योषितांस्वर्गंगामुशलेनशालयइवत्वत्कीर्तयः कंडिताः तासांराशिरसौतुषारशिखरीतारागणास्तत्कणाः प्रोद्यत्पूर्णसुधांशुबिंबमसृणज्योत्स्नाश्चतत्पांसवः ८५

ताः वर्णनसामर्थ्यायोगात् आकाशानंत्यत्वात् त्वद्यशसोप्यानंत्यमुक्तं ८४ कृत्वेति हे रघुपते दिशएवयोषितस्तासांवृंदेनमेरुमेवोलूखलंकृत्वास्वर्गंगेवमुसलंतेनत्वत्कीर्तयः शालयइवकलमाइवकंडितानिस्तुषीकृतास्तासांकीर्तीनामसौतुषारशिखरीहिमवान्राशिरभूत् तारागणास्तत्कणाः यथातंडुलकणाभवंतितद्वत् प्रोद्यंश्चासौपूर्णसुधांशुश्चतस्यबिंबस्ययामसृणानिबिडाज्योत्स्नास्ता एवतत्पांसवः धूलीस्थानीयाः ८५



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

अथांगदो रामबाहुप्रशस्तिमनुवर्णयति समुद्गताविति हे राम यद्यस्मात् समकालमेव एकदैव रावणस्य यशःप्रतापावेव पुष्पवंतौ सूर्याचंद्रमसौ तव तुभ्यं संप्रदा
नेषष्ठी समुद्गतौ सम्यगुदितौ एकयोक्त्या पुष्पवंतौ दिवाकरनिशाकरावित्यमरः चकारात् अरेः रावणस्य चापो धनुरेव शेषः शिवः मदो गर्वोपि शेषोनंतः एतावपि
समकालमेव समुद्गतौ द्वितीयचकारात् पुनः शेषग्रहणं हर्यनंतशिवाः शेषा इति शाश्वतः सूर्याचंद्रमसौ रुद्रानंतौ च एकत्र स्थिताः प्रलयमेव कुर्वंति तदनिष्टशां
त्यै तेभ्यश्चतुर्भ्यो यअनिष्टस्तस्य शांत्यै त्वत्खड्गमेव तीर्थं जातं त्वत्खड्गमाश्रित्य सर्वे नष्टा इति भावः प्रतापमदचापस्तु शरीरपर्यंता एव तद्व्यतिरेकेन यशसः स्थि

समुद्गतौ यत्समकालमेव यशःप्रतापौ नव पुष्पवंतौ रामारिचापश्च मदश्च शेषस्त्वत्खड्गतीर्थं तदनिष्टशांत्यै ८६ किंचित्कोपकलावि
लासविभवव्यावल्गमूर्तेर्भुजो विक्षेपाद्करोन्निशाचरबलं प्रत्यर्थिनां यत्पुरः क्रंदत्फेरुरटत्कफेरुविघटद्दारुस्फुटद्गुग्गुलुप्रक्रीड
त्कपिनिश्वसत्फणिरटद्गृध्रं भ्रमद्द्वीपि च ८७ तिरस्ति तदपि सीताहरणान्नष्टं यद्वा स्पष्टमेव यत्समकालमेव तुभ्यं रावणः यशः प्रतापौ समुद्गतौ
अरिचापो मदश्च समुद्गतौ तेभ्यो यदनिष्टं तच्छांत्यै त्वत्खड्गतीर्थमेव शेषः समर्थो जातः तन्नाशे प्यवशिष्यत इति शेषः ८६ किंचिदिति किंचित्तुच्छाया कोपकला
तस्या विलासस्य यो विभवस्तेन व्यावल्गा विगतमावल्गनं यस्याः सा मूर्तिर्यस्य तत्संबुद्धौ हे तुच्छकोपविलासागाधरामतव भुजः प्रत्यर्थिनां रावणेंद्रजिदादीनां वि
क्षेपात् हननात् निशाचरबलं रक्षःसैन्यं यदिति प्रसिद्धं तत्तथा अकरोत् कथं तदाह क्रंदंतः फेरवः शिवाः यस्मिन् तदकरोत् फेरुः शिवा सृगालस्त्री निविश्वः समवि

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

शेषणैः सैन्यं विशिनष्टि रटंतः कफेरवो यस्मिंस्तत् कंकः कफेरुर्वज्रांगइतिविश्वः पुनः किंभूतं विघटंति भज्यमानानि दारूणि येन तत् तस्मात्तेनवृक्षपातप्रसंगात्
स्फुटत् धूपितो गुग्गुलुः यत्र तच्छिरोग्रहणात् देवीनां महोत्सवे गुग्गुलुधूपः प्रक्रीडिताः कपयो येन तत् इदंकस्य इदंकस्येति शिरश्चालनं क्रीडनं निश्वसन्भ्रांतिभा
रेणफणीशेषो येन तत् रटंत्यो आक्रोशंत्यो राक्षस्यो राक्षसस्त्रियो यस्य तत् भिल्लीरक्षः स्त्रियामपीति चरकः भ्रमंतो द्वीपिनो व्याघ्रा यस्य तत् द्वीपीनाव्याघ्रगृ
ध्रयोरिति हैमी ८७ रावणबलमुद्दिश्य नहिजयिनो रामस्य बलमुद्दिशति सैन्येति हेत्रद्रुहो महेंद्रस्य सा वाहिनी सा सेनाज्ञानविकारिणो ज्ञाने रामादात्मनिधनज्ञाने

शैत्यं ज्ञानविकारिणो नहि हि भवे हृत्रद्रुहोवाहिनी यैर्दृष्ट्वा रणलंपटं भुजयुगं दृष्टं पुनस्तावकं यस्याश्रित्य बलं स्थलीकृतसरिन्नाथः
प्लवंगेश्वरैः क्रांतो भूरिभयेन यत्र शिशिरायस्यां मयूखा रवेः ८८ रामः प्रस्थाप्य तां वानरवीरसेनां तत्कालयोग्याभरणप्रदानैः भुन
क्ति राज्यं निजबंधुवर्गैः समं ससीतः सह लक्ष्मणश्च ८९

सतिविक्रियमाणस्य रावणस्य भुजयुगं दृष्ट्वा परं आत्मविस्तारं शैत्यं औष्ण्याभावं आनय
यामास पदच्युविस्तारे सा का यस्यां इंद्रसेनायां रवेरपि मयूखाः शिशिरा जाताः सैन्यरेणुबहुत्वाच्छादकतया घर्माभावाच्छिशिरत्वम् पुनः पाश्चात्यै रावणादिभि
स्तावकं भुजयुगं दृष्टं तेषां त्वद्भुजेन भये इति भयन्न भवेन्न किंतु भवे देव कर्मणि सप्तमी कीदृशं भुजयुगं अरणं भीतशरणं लातीति अरणलं भीनाभयदमिति किंभुज
युगमित्यपेक्षायामाह प्लवंगेश्वरैः सुग्रीवादिभिः यस्य त्वद्भुजयुगस्य बलमाश्रित्य स्थलीकृतश्चासौ सरितांनाथश्च भूरि यथा स्यात्तथाक्रांतः आक्रांतः गतो वा उत्तीर्ण





CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इत्यर्थः क्रमुखादविक्षेणेइंद्रजयी रावणः त्वामासादयन् नष्टइतिभावः ८८ प्रेतिप्सुनक्ति अभोजीत् भूतेवर्तमानता ८९ रामइति अथोक्तानुवादपूर्वकंसीता निष्कासनमनुवर्णयति रिपुवधाद्धेतोः निर्वासिता अयोध्यामध्यतो वाल्मीकेराश्रमं प्रस्थापिता सीता अत्रेयंकथा प्राप्तराज्येनरामेण कदाचिन्नतकंधरः पृष्टः मदीयंवृत्तं लोकेकीदृगिति मुहुर्मुहुः पृष्टेनतेनोक्तं सर्वंशुभ्रंयशः परंतु चिररक्षोगृहस्थासीतासंग्रहात् गर्हणीमसत्वमिति ततोकिंवदंतीभीतेन रामचंद्रेणदत्ताज्ञो लक्ष्मणो वाल्मीकेराश्रमंतथादोहदत्वेन पूर्वमेववृत्तंत्यक्तवानिति ९० वनेति लंकासमरे सुखेन हतंमांमारुतेनर्हनूमानजीवयत् अतएवात्तवैरः कृतवैरइवेति

रामोदाशरथिर्दिवाकरकुले तस्यांगनाजानकी नीतासादशकंधरेण वनतोलंकालयंछद्मना रामेणापिकपींद्रसंगमवशादंभोनिधिं लीलयाबध्वापर्वतमालयारिपुवधादानीयनिर्वासिता ९० तत्रत्यक्तसीतोलक्ष्मणोविलपति वनेविमोक्तुंजनकस्यकन्यां श्रोतुंचतस्याः परिदेवितानि सुखेनलंकासमरेहतंमामजीवयन्मारुतिरात्तवैरः ९१ दुःखंद्योनयतिवनेत्यादिना सर्वंइदानींतस्यांरामवीर्यंद्योतयितुमाह

इदानीमहमेवदुःखेनमरिष्यामीतिभावः ९१ पशुरपीति प्रसवकाले पशुरपिमृगः मृगींनजहाति तत्रानुरक्तश्चमृगेंद्रस्यसिंहस्य शब्देनचकितोपि देहपातमंगीकृत्यमृगस्तिष्ठति भीतस्यानुरक्तेरभावात् अयंरामरूत्यक्तवानेव तत्रविचिकित्सति अयंराम अरघुः रघुवंशजन्मा नतेषांनिर्दयत्वाभावात् इयमप्यजानकीजनकजान तस्यांतद्विरहेणप्राणधा[illegible]योगात् आवांरामलक्ष्मणयोः मध्येयदिसरामएवतस्याः विरहेनजीवति तर्हिवेधानिर्दयोस्तिसी

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तानिर्वासनात् रामलोकांतरप्रापकत्वाच्च ९२ रामंव[...]यन् दैवेदुर्लंघ्यत्वमाह येनतस्यरामस्यैकैकमसाधारणं[...]तंकिंवर्णयते कर्मानंतत्वनियमात् अतोदैवमेव
वर्णय येनसोप्येतादृक्बलोपिरामः सहसैवकथांप्रापितः रामोवतीर्यरावणंहत्वावैकुंठंगतइतिकथैवावशिष्टा [...]नकृतराज्यस्यरामस्यवैकुंठगमनमुक्तं ९३ अ
थैनंमहानाटकमुपसंहरन् श्रवणफलमाह रम्यमिति कांडाःबाणाः तेषांशौंडेनप्रावीण्येनव्याप्तंधनुर्वेदवैदग्ध[...]सदिति ब्रह्मांडएवभांडंपात्रंतत्रपुण्येरणशि

पशुरपिनमृगोमृगींमृगेंद्रध्वनिचकितःप्रसवक्षणेजहाति अयमरघुरजानकीयमावांयं[...]नसजीवंतिनिर्दयोद्यवेधाः ९२ यद्भग्नं
धनुरीश्वरस्यसमरेयज्जामदग्न्योजितस्त्यक्तायेनगुरोर्गिरावसुमतीसेतुःपयोधौकृतः एकैकं[...]दशकंधररक्षयकृतोरामस्यकिंवर्ण्यतेदैवंव
र्णययेनसोपिसहसानीतःकथाशेषताम् ९३ रम्यंश्रीरामचंद्रप्रबलभुजरहत्तांडवंकांडशौंड[...]प्तंब्रह्मांडभांडेरणशिरसिमहानाटकंपाट
वाब्धिं पुण्यंभक्तांजनेयप्रविरचितमिदंयःशृणोतिप्रसंगान्मुक्तोसौसर्वपापाद्रिभिदविजय[...]रामवत्संगरेषु ९४ चतुर्दशभिरेवांकैर्भुव
नानिचतुर्दश श्रीमहानाटकंधत्तेकेवलंब्रह्मनिर्मलम् ९५

रसि पाटवाब्धिंरणमार्गागारंसुबोधम् ९४ चतुर्दशभिरिति महानाटककर्ताचतुर्दशसंख्याकानिभुवन[...]निप्रति ब्रह्ममोक्षंधत्तेप्रापयति एकैकांकवर्णनादे
कैकलोकस्यमोक्षःस्यात् किंपुनःसर्वस्यश्रवणादित्येतिभावः किंभूतंब्रह्मकेवलमित्युक्तम् ९५ छ छ छ छ

